पूतपाप । त्रि॰ निरस्तस्वर्गभोगप्रतिबन्धकपापे ॥

पूतफल : । पु॰ पनसे ॥

पूता । स्त्री॰ दूर्वायाम् ॥

पूतात्मा । पुं॰ ईश्वरे ॥ पूत । शुद्ध. सत्त्वादिगुणसम्बन्धरहित आत्मा स्वरूपयस्य ॥ पूतश्चासावात्माचेति वा ॥ शुद्धदेहे ॥ शुद्धान्त : करणे ॥ पूतश्चात्मायस्य ॥

पूति । स्त्री॰ दुर्गन्धे ॥ पवित्रताया म् ॥ खट्टाशमुष्कै ॥ न॰ रोहिष तृणे ॥

पूतिक : । पुं॰ पूतिकरञ्जे ॥ पुनाति । पूञ॰ । तिन्तिडीकादयश्चेति॰ इकन् ॥ न॰ विष्टायाम् ॥

पूतिकरज : । पुं॰ लट्टाकरञ्जवृक्षे । कालिकारके । कलहनाशने । काष्टवतिकरञ्जे । काँटाकरञ्जइति॰ भा॰ ॥ पूतिश्चासौकरजश्च ॥

पूतिकरञ्ज । पुं॰ पूतिकरजे ॥

पूतिकर्णक । पुं॰ कर्णरोगविशेषे ॥ तल्लक्षणयथा । कर्णविद्रधिपाकाद्वा जायतेचाम्बुपूरणात् । पूयस्रवतिवापूतिसज्ञेय: पूतिकर्णक : ॥ अस्यौषधयथा । निर्गुण्डीसुरसस्तैलसिन्धुधूमरजोगुड : पूरणात्पूतिकर्णस्यशमनोमधुसंयुत ॥ अथवा । वरुणार्द्रकपित्थाम्रजम्बूपल्लवसाधितम् । पूतिकर्णापहंतैलंजातीपत्ररसेनवेति चक्रपाणिदत्त ॥

पूतिका । स्त्री॰ मार्जार्याम् ॥ पोइ इ॰ प्र॰ लताशाके । उपोदक्याम् ॥

पूतिकामुख । शम्बूके ॥

पूतिकाष्ठम् । न॰ सरलद्रुमे ॥ देवदारुमहीरुहे ॥ पूतिचतत्काष्ठञ्च ॥ पूते । पावनस्यकाष्ठ वा ॥

पूतिकाष्ठकम् । न॰ पूतिकाष्ठे ॥

पूतिगन्ध । पुं॰ गन्धके ॥ हिङ्गुदीवृक्षे ॥ न॰ रङ्गे ॥ त्रि॰ दुर्गन्धे ॥

पूतिगन्धि । } त्रि॰ दुर्गन्धे<br>पूतिगन्धिक }

पूतिगन्धिका । स्त्री॰ वाकुच्याम् ॥

पूतितैला । स्त्री॰ ज्योतिष्मत्याम् ॥

पूतिदारु । न॰ देवदारुणि ॥

पूतिनस्य : । पु॰ नासारोगभेदे ॥ तल्लक्षणयथा । दोषैर्विदग्धै र्गलतालुमूलेसम्मूर्छितोयस्यसमीरणस्तु । निरेतिपूतिर्मुखनासिकाभ्यांतपूतिनस्य प्रवदन्तिरोगम् ॥ औषधन्तु । । व्याघ्रीदन्तीवचाशिग्रुस्वरसव्योषसम्भवे । पाचितंलावणतैलपूतिनासागदजयेत् ॥ अथवा । त्रिकटुविडङ्गकसैन्धवबृहतीफलशिग्रुस्वरसदन्तीभि । तैलङ्गोजलसिद्धंनस्यं स्यात्पूतिनस्यस्य ॥

पूतिपत्र : । पुं॰ श्योनाकविशेषे ॥

पूतिपुष्पिका । स्त्री॰ मातुलुङ्गायाम् ॥

पूतिफली । स्त्री॰ वाकुच्याम् । सोम

राज्याम् ॥ पूतिफलीष्वखा पाक कर्णोतिङीष् ॥
पूतिमयूरिका । स्त्री॰ अजगधायाम् ॥
पूतिमेद । पु॰ अरिमेदे ॥
पूतिवात । पुं॰ बिल्ववृक्षे ॥ अधोवायौ ॥
पूतिवृक्ष । पुं॰ श्योनाके ॥
पूतिशारिजा । स्त्री॰ खट्टाश्याम् ॥
पूतिक । पुं॰ गधमार्जारे ॥ घोडा करञ्ज इ॰ भा॰प्र॰ करञ्जविशेषे ॥ लताविशेषे ॥
पूतिकरञ्ज । पु॰ लट्वा खकरञ्जे ।
पूतिगण्ड । पु॰ पूतिकोटे ॥
पूतिभाव । पुं॰ दौर्गन्ध्ये ॥ क्लेदे ॥
पूत्यण्ड । पु॰ गन्धकीटे ॥ गन्धैणे ॥ यस्यनाभौमृगनाभिर्जायते ॥
पूप । पुं॰ अपूपे । पिष्टके । पूआ॰ इ॰भा॰ ॥ यथा ॥ समितागुडतोयेनमेलयित्वासुमर्दिताम् । घृतेविस्तार्यसुपचेत्सुवृत्तोमृदुपूपक ॥ अपूप , पुष्टिदोवल्योहृद्योगुरुतर स्मृत । पित्तानिलहरोवृष्य सुपक्वोरुचिकारक ॥ पवनपू: । पूञ्॰स॰क्विप् । पुवपाति॰पिवतिवा । पारच्छणे॰पानेवा । आतइतिक ॥
पूपला । स्त्री॰ पोलिकायाम् ॥
पूपाली । स्त्री॰ पोल्याम् ॥
पूपाष्टका । स्त्री॰ आग्रहायणीपूर्णिमाया परत कृष्णाष्टम्याम् ॥
पूपिका । स्त्री॰ पूलिकायाम् ॥
पूयम् । न॰ पक्वव्रणादिसम्भवघनीभूतशुक्लवर्णविकृतरक्ते । क्षतजे । मलजे । पीप॰राध॰इ॰भाषा ॥
पूयनम् । न॰ रक्तविकारे । पूये ॥
पूयरक्त । पु॰ नासारोगभेदे ॥ तल्लक्षणम् । दोषैर्विदग्धैरथवापिजन्तोर्ललाटदेशेऽभिहतस्यतैस्तै । नासास्रवेत्पूयमसृग्विमिश्र तपूयरक्त प्रवदन्तिरोगम् ॥
पूयारि । पुं॰ निम्बपादपे ।
पूयालस । पु॰ सन्धिगतरोगभेदे ॥ लक्षणयथा । पक्व शोफ सन्धिज सस्रवेद्य सान्द्र पूयपूतिपूयालस । स . ॥ इतिसुश्रुत ॥
पूयोद । पु॰ नरकान्तरे ॥
पूर । पु॰ जलसमूहे । अम्भसावृद्धौ ॥ व्रणसंशुद्धौ ॥ खाद्यविशेषे ॥ न॰दाहागुरुणि ॥
पूरक । पुं॰ प्राणवायौ , शनैर्वामनासापुटेन॰दक्षिणनासापुटेनवा सव्यापसव्यन्यायेनान्त प्रवेशने ॥ वाह्येनवायुनामुक्तं शक्तिसीमप्रपूरणम् । पूरक सततभ्यासात्सुगुर्वपिविकर्षयेत् ॥ नासिकोत्कृष्टउच्छ्वासोध्मात पूरकउच्यते ॥ आत्मानुसन्धाने ॥ ब्रह्मैवास्मी तियावृत्ति पूरकोवायुरीरित . ॥ पूरीआप्याय

णे । खल्‌ ॥ बीजपूरे ॥ गुणकाङ्क्षे ॥ पुं० प्रेतदेहनिष्पादकाशौचकादेय दशपिण्डे ॥ त्रि० पूरणकर्त्तरि ॥

पूरण । पुं० सेतौ ॥ विष्णुतैले ॥ न० अङ्कानांगुणने ॥ वृष्टौ ॥ कुटन्नटे ॥ वानतन्तुषु ॥ पिष्टप्रभेदे ॥ हिङ्गुधान्यजलेमाससुखिन्न सूक्ष्मकुट्टितम् । सयुक्तहिङ्गुजीरार्द्रबीजपूरैलसैन्धवैः ॥ घृतेतप्तेपरिभृष्टधूपितमासपूरणम् ॥ मासस्यपूरणरुच्यं हृद्यं पुष्टिकरंपरं । वातपित्तहरंबल्यं मन्दाग्निकफनाशनम् ॥ त्रि०पूरके । पूरणकर्त्तरि ॥ पालनकर्त्तरि ॥ पृणाति । पॄपालनपूरणयो । ल्युट् ॥ पूर्य्यतेऽनेन । पूरी० । करणेल्युट् ॥

पूरणी । स्त्री० शाल्मलिद्रुमे ॥ पटारम्भकसूत्रेषु ॥ पूरणकार्य्याम् ॥ पूरयति । पूरी० । ल्युट् । ङीप् ॥

पूराम्लम् । न० वृक्षाम्ले ॥

पूरिका । स्त्री० पूपविभेदे । पूरी० कचौरी० इ०भा० ॥ यथा । माषाणांपिष्टिकांयुञ्ज्याल्लवणाद्रर्कहिङ्गुभिः । तयापिष्टिकयापूर्णासमितांकृतपोलिकां ॥ ततस्तैलेविपक्वा सापूरिकाकथितावुधैः । रुच्यासा ष्णागुरुः स्निग्धावातपित्तासृग्दूषिका । चक्षुस्तेजोहरीचोष्णापाकेवातविनाशिनी। तथैवघृतपक्वाऽपिचक्षुष्या रक्तपित्तहृत् ॥ वदरचूर्णपूरिकातु । घृतमिश्रकणिक्कायामेलितपञ्चमांशकम् । वदरत्वग्भवंचूर्णंजलेना लोड्यपीडयेत् ॥ पूरिकाघृतसंपक्वा खण्डपाकविलेपिता । पूरिकावद्रोऽग्निमश्चस्निग्धापित्तहराहिमा ॥ मधुरावृष्यवातघ्नी सराच्छर्द्दिविनाशिनी । एवविप्रायखर्जूरशर्कराना रिकेरकैः ॥ द्राक्षयावैसुपूर्णैस्तुपूरिका पूर्ववत्पचेत् ॥

पूरित । त्रि० कृतपूरणे । पूर्णे ॥ पूर्य्यतेस्म । पूरी० । क्त । वाद्दान्तेति पक्षेइट् ॥ गुणिते ॥

पूरुष । पुं० पुरुषे । नरे ॥ पुंसि ॥ चेतने ॥ यथा । यस्माद्विश्वमुदेति यत्ररमतेयस्मिन्पुनर्लीयतेभासाय स्यजगद्विभातिसहजानन्दोज्ज्वल यन्महः । शान्तं शाश्वतमक्रियमयम् पुनर्भावायभूतेश्वरम् द्वैतध्वान्तम पास्ययान्तिकृतिनः प्रस्तौमितपूरुषमिति ॥ पुरति । पुरअग्रगमने । पुर कुषन् । अन्येषामपीतिदीर्घः । पृषोदरादिर्वा ॥ यद्वा । पूरयति पूर्य्यतेवा । पूरी०वा० कुषन् ॥

पूर्ण । त्रि० व्याप्ते ॥ पूरिते ॥ पुं० शक्तै ॥ समर्थे । सकले ॥ पूर्य्यतेस्म पूरी० । कर्त्तरिकर्मणिवाक्तः । वा दान्तेतिसाधुः ॥

पूर्णक'। पुं॰ स्वर्णचूडपक्षिणि ॥ कुत्सित ' पूर्णः। सञ्ज्ञायांकन् ॥
पूर्णकुम्भः। पुं॰ भद्रकुम्भे। जलपूरितघटे ॥ पूर्णश्चासौकुम्भश्च ॥
पूर्णकोष्ठा। स्त्री॰ नागरमुस्तायाम् ॥
पूर्णचन्द्र.। पुं॰ सम्पूर्णेन्दूभयाष्टम्योर्मध्यस्थेन्दौ ॥ पूर्णश्चासौचन्द्रश्च ॥
पूर्णता। स्त्री॰ पर्याप्तौ ॥
पूर्णपात्रम्। न॰ वस्तुपूर्णपात्रे ॥ वर्द्धपत्रे। पूर्णानके ॥ उत्सवकालेहर्षात्गृहीतवस्त्रालङ्कारादौ ॥ होमकर्मणिब्रह्मदक्षिणायाम् ॥ हर्षादुत्सवकालेयदलङ्काराम्बरादिकम्। आकृष्यगृह्यतेपूर्णपात्रपूर्णानकञ्चतत्॥
पूर्णमा। स्त्री॰ पौर्णमास्याम् ॥
पूर्णमास.। पुं॰ पौर्णमासयागे ॥
पूर्णमासी। स्त्री॰ पूर्णिमायाम् ॥
पूर्णवीज.। पुं॰ वीजपूरे ॥
पूर्णवैनाशिक.। पुं॰ वैनाशिके ॥ वैशेषिकास्तावदर्द्धवैनाशिका. सर्वक्षणवादिनस्तुपूर्णवैनाशिकत्वेनप्रसिद्धा ' शार्ङ्गे ॥
पूर्णा। स्त्री॰ पञ्चमीदशमीपूर्णिमामावास्यासु ॥
पूर्णानकम्। न॰ वर्द्धापने ॥ आनके॥ पटहे ॥ पात्रे ॥ पूर्णपात्रे। हर्षात्उत्सवकालेवस्त्राद्याकर्षणे ॥
पूर्णावतार:। पुं॰ नृसिंहे ॥ रामे ॥ परिपूर्णतमे श्रीकृष्णे ॥

पूर्णाहुता। स्त्री॰ पराहन्तायाम्। यथाहुर्वार्तिककारा। भुक्तयथान्नं कुक्षिस्थस्तात्मत्त्वेनैवपश्यति। पूर्णाहन्ताकवलितविश्वंयोगीश्वरस्तथेति
पूर्णिका। स्त्री॰ नासाच्छिन्नीनामकपक्षिणि ॥
पूर्णिमा। स्त्री॰ पौर्णमास्याम्। शुक्लपक्षान्तिमतिथौ ॥ साद्विविधा। यथा। राकाचानुमतीचैवद्विविधा पूर्णिमामता। पूर्वोदितकलाक्षीणे पौर्णमास्यानिशाकरे ॥ पूर्णिमानुमतीज्ञेयापश्चास्तमितभास्करे ॥ यस्मात्तामनुमन्यन्तेदेवतापितृभि'सह। तस्मादनुमतीनामपूर्णिमाप्रथमा स्मृता ॥ यदाचास्तमितेसूर्येपूर्णचन्द्रस्यचोद्गम:। युगपत्सोत्तरारागात्तदानुमतिपूर्णिमा॥ राकान्तामनुमन्यन्तेदेवतापितृभि. सह। रञ्जनाच्चैवचन्द्रस्यराकेतिकवयोऽब्रुवन् ॥ तस्याजातस्यफलयथा। कन्दर्पतुल्योयुवतिप्रियश्चन्यायाप्तवित्त' सततसहर्ष'। शूरोवलीशास्त्रविशारदश्च तुपूर्णिमाजन्मनियस्यजन्तो:॥ पूरी॰। भावेक्त:। पूर्णचन्द्रस्यपूरणम्॰ तेननिर्वृत्ता ॥
पूर्तम्। न॰ खातादिकर्मणि ॥ आदिनादेवकुल्यादिग्रह:। तदुक्तम्। पुष्करिण्य: सभावापीदेवतायतनानिच। आरामश्चविशेषेण

पूर्त्तं कर्मविनिर्दिशेत् ॥ अपिच । वापीकूपतडागानि देवतायतनानि च ॥ अन्नप्रदानमाराम पूर्त्तमित्यभिधीयते ॥ स्मृतिः ॥ इष्टापूर्त्तं तदविनाकीर्त्तम् ॥ आरामादिक्रियाजीफले ॥ मोक्षमे ॥ त्रि० पूरिते ॥ छन्ने ॥ न० स्थम्० पूर्यतेस्म वा । पू० । भाविकर्मणिवार्त्ता नष्या स्यैतिनिष्ठानत्वम् ॥

पूर्त्तिः । स्त्री० पर्याप्तौ । उपसम्पन्ने ॥ पूरणे ॥

पूर्व । त्रि० पूर्वजे ॥ प्राचि ॥ आद्ये ॥ अग्रे ॥ श्रुतिभेदे ॥ न० कारणे । पूर्वभाविनि ॥ पुमांसि ॥ अतिक्रान्ते ॥ पूर्वति । पूर्वपूरणे । अच् । पू० ॥

पूर्वगङ्गा । स्त्री० रेवायाम् । नर्मदानद्याम् ॥ पूर्वाचासौगङ्गाच ॥

पूर्वज । पुं० ज्येष्ठभ्रातरि ॥ अनादौ ॥

पूर्वजाः । पुं० भूमिदिव्यपितृगणे । व्यस्तभवेषु । कव्यवालादिषु ॥ पूर्वस्मिन्कालेजातः सप्तम्यांजनेर्डः ॥

पूर्वजा । स्त्री० ज्येष्ठभगिन्याम् ॥ टाप् ॥

पूर्वजिन । पुं० अतीतजिनविशेषे । मञ्जुघोषे । शार्दूलवाहने ॥

पूर्वदिक्पति । पुं० इन्द्रे ॥

पूर्वदिक् । स्त्री० प्राच्यादिशि । पूर्वस्याम् ॥

पूर्वदेव । पुं० असुरे । दैत्ये ॥ पूर्वश्चासौदेवश्च । पूर्वापरप्रथमेत्यादिना समासः ॥ यद्वा । पूर्वदेव । अन्यायाधिदेवत्वाद्भ्रष्टः । सुप्सुपेतिसमासः ॥

पूर्वदेश । पुं० सूर्योदयोपलक्षितेदेशे । वर्त्तनी ॥

पूर्वपक्ष । पुं० शुक्लपक्षे ॥ पूर्वश्चासौपक्षश्च ॥ शास्त्रीयप्रश्ने । सिद्धान्तविरुद्धकोटौ । चोद्ये । देश्ये । फक्किकायाम् ॥

पूर्वपक्षपाद । पुं० चतुष्पाद्व्यवहारान्तर्गतेप्रथमेपादे । भाषायाम् । प्रतिज्ञायाम् । पक्षे ॥

पूर्वपर्वत । पुं० उदयाचले ॥ पूर्वपर्वतः ॥

पूर्वफल्गुनी । स्त्री० अश्विन्यादिनक्षत्रान्तर्गतैकादशेनक्षत्रे ॥ तत्रजातस्याफलंयथा । शूरस्त्यागीसाहसी भूमिभर्त्ताकोपाक्रान्त सत्यच्छिरालोतिदत्तः । धूर्त्तः क्रूरोत्यन्तवाचालिकः प्राक्फल्गुन्यस्य जन्मकाले चयस्य ॥

पूर्वफल्गुनीभव । पुं० बृहस्पतौ ॥

पूर्वभद्रपद । पुं० प्रोष्ठपदासु । पञ्चविंशतिमेनक्षत्रे ॥

पूर्वभद्रपदा । पूर्वभाद्रपदा । स्त्री० } अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतपञ्चविंशतितमेनक्षत्रे । प्रो

ष्टपदासु ॥ तत्रजातस्यफल । जि-
तेन्द्रिय ' सर्व्वकलासुदक्षोजितारि
पक्ष खलुतस्यनित्यम् । भवेन्मही
यान्सुतरामपूर्वापूर्वापदाभाद्रपदा
प्रसूतौ ॥ पूर्वास्वताभाद्रपदाश्च ॥
एकवचनान्तोपि ॥

पूर्वयक्ष । पु० जिनवि० । जलेन्द्रे ।
मणिभद्रे ॥

पूर्वरङ्ग । पु० नाट्यशालायाम् ॥ ना
ट्योपक्रमे । प्राक्सङ्गीते । गुणनि
कायाम् ॥ रङ्गप्रधानाद्योरङ्गविघ्न
शान्तिकारीनान्दीपाठगीतवादित्रा
द्यनेकाङ्गविशिष्टोनाट्यादौकर्त्तव्य:
कर्म्मविशेष पूर्वरङ्ग । तदुक्तंवस
न्तराजीये । यन्नाट्यवस्तुन पूर्वरङ्ग
विघ्नोपशान्तये । कुशीलवा प्रकु-
र्वन्तिपूर्वरङ्ग ' प्रकीर्त्तित इति ॥
पूर्वरङ्ग विधायादौसूत्रधारेविनिर्गते
। प्रविश्यतद्वदपर काव्यमास्थापयेन्न
ट ॥ प्रथमपूर्वरङ्गश्चतत . प्रस्ताव
नेतिच । चारम्भे सर्वनाट्यानामेत
त्सामान्यमिष्यते ॥ पूर्वरज्यतेऽ
स्मिन् । रञ्जे घञ् । कुत्वम् ॥

पूर्वराग । पुं० नायिकानायिकयोर्द्द
शाविशेषे ॥ श्रवणाद्दर्शनाद्वापिमि
थ सगूढरागयो । दशाविशेषो
योऽप्राप्तौपूर्वराग सउच्यते ॥ इ० ॥

पूर्वरात्र . । पुं० रात्रे.पूर्वभागे ॥ रा
त्राह्नाहा : पुंसि ॥

पूर्वरूपम् । न० पूर्वलक्षणे ॥ वैद्यके
भाविव्याधिबोधकचिह्ने ॥

पूर्ववत् । न० अनुमानविशेषे ॥ यथा
। दृष्टस्वलक्षणसामान्यविषययत्०
तत्पूर्ववदुच्यते । पूर्वप्रसिद्धमदृष्ट
स्वलक्षणसामान्यमितियावत्०तद्य
स्यविषयस्त्वे नास्ति०अनुमानज्ञान
स्येतिपूर्ववत् । यथाधूमाद्वह्नित्व-
सामान्यविशेष . पर्वतेनुमीयते०
तस्यवह्नित्वसामान्यस्यस्वलक्षण
वह्निविशेषोदृष्टोऽग्न्यालयम् । वीता
वीतभेदात्तद्द्विविधम् ॥

पूर्ववादी । त्रि० प्रागभियोक्तरि । प्र-
थमविवादिनि ॥

पूर्ववित् । त्रि० अतीतज्ञे ॥

पूर्वशैल . । पु० उदयपर्वते ॥

पूर्वसर । त्रि० अग्रगामिनि ॥

पूर्वा । स्त्री० पूर्वदिशि । प्राच्याम् ॥
तद्दिग्भववायुगुणा । पूर्वस्तुमधु
रोवात स्निग्ध कटुरसान्वित
। गुरुर्विदाहशमनोवातद ' पित्त-
नाशन ' ॥ इति ॥

पूर्वाद्रि । पुं० उदयाचले । दिनमूर्द्ध-
नि ॥

पूर्वाषाढा । स्त्री० अश्विन्यादिसप्तवि
शतिनक्षत्रान्तर्गतविंशतिसंख्याकन
क्षत्रे ॥ तत्रजातस्यफलंयथा । भूयो
भूय . सूयमानानुरक्तो भक्तोदेवेब
न्धुमान्योतिदक्ष . । पूर्वाषाढाक-

न्मकालेयदित्यादाषाढ स्याद्वैरि वर्गेनितान्तम् ॥ पूसावर्षाचाषाढाच ॥

पूर्वाह्ण । पु० द्विधाविभक्तदिनस्य पूर्वभागे ॥ यथा । आवर्तनात्पूर्वाह्णोऽपराह्णस्तत पर । आवर्तनात्० वासरस्यच्छायापरिवर्तनात्प्रागितिशेष. ॥ त्रिधाविभक्तदिनस्यप्रथमभागे ॥ स्वचि अष्टदण्डदिनमानेसूर्योदयावधिदशदण्डात्मक. काल यथा । पूर्वाह्णोवैदेवाना मध्य दिनमनुष्याणामपराह्ण पितृणामितिश्रुति ॥ अह्न. पूर्वम् । पूर्वापराधरैत्येकदेशिसमास. । राजाह सखिभ्यजिष्टतिटच् । अह्नादेशोणत्वम् ॥

पूर्वाह्णेतनम् । त्रि० पौर्वाह्णिके ॥ पूर्वाह्णेभव । विभाषापूर्वाह्णापराह्णाभ्याम्०इतिट्युट्युलौतुट्च । घकालतनेष्विस्थलुक् ॥

पूर्वेद्यु । अ० प्रात काले । धर्मवासरे ॥ पूर्वस्मिन्नहनि ॥ रुद्य पर दित्यादिनापूर्वशब्दादेद्युस्प्रत्ययो निपात्यते ॥

पूष । पु० ब्रह्मदारुणि । तूत० इ० भा० ॥ पूषवृद्धौ । इगुपधात्क ॥

पूषक: । पु० ब्रह्मदारुणि ॥ पूषएव क ॥

पूषा । पु० सूर्ये ॥ जगत पोषणात् । पुष्णाति । पुषपुष्टौ । श्वन्नुक्षन्पूषन्निति निपातित ।

पूषभाषा । स्त्री० अमरावत्याम् । इन्द्रनगर्याम् । सुरपुर्याम् ॥

पूषसुहृत् । पु० शिवे ॥

पूषा । स्त्री० पिङ्गलापृष्ठवर्त्तिन्यानाडाम् ॥ पूषातुपिङ्गलापृष्ठे नीलजीमूतसन्निभा । याम्यभागस्यनेत्रान्तायावत्पादतलगता ॥

पृक्का । स्त्री० मरुन्मालायाम् । पिशुनायामोषधौ । असारक० इ० भा० । पिर्ड्डि० इ० गौ० भा० स्पृश्यते । स्पृशस्पर्शने । बा० कक् । पृ० ॥

पृक्तम् । न० धने ॥ त्रि० स्पृष्टे ॥ सम्पर्कयुक्ते ॥ पृच्यते । पृची० । क्त ॥

पृक्ति । स्त्री० सम्पर्के । स्पृष्टौ । स्पर्शे ॥ पर्चनम् । पृचीसम्पर्के । क्तिन् ॥

पृच्छा । स्त्री० अनुयोगे । प्रश्ने ॥ प्रच्छनम् । प्रच्छज्ञीप्सायाम् । गुरोश्चह लत्त्वस्य । सम्प्रसारणम् ॥

पृच्छितनु. । पुं० प्रश्नलग्ने ॥

पृच्छ्यम् । त्रि० प्रष्टव्ये ॥

पृतना । स्त्री० सेनामात्रे ॥ सेनाविशेषे । तिसृषुवाहिनीषु ॥ अत्र भा ॥ २४३ । रथा २४३ । अश्वा ७२९ । पादातिका १२१५ । समस्तसङ्ख्ययाखचितुर्विंशतिभि स्मृता । २४३० ॥ प्रियते । पृङ्व्या-

रैव। सञ्ज्ञायांकन् ॥ यद्वा प्रथते ॥ प्रथप्रख्याने। पर्थयति॰पथ्यतेवा। पृथुप्रक्षेपे। चु॰। अर्भकपृथुकेति पृथेर्वाकुकन्॰प्रथे सम्प्रसारणञ्च ॥ यद्वा। पृथुकायति। कै शब्दे। आतइतिक ॥ त्रि॰ शिशौ। अर्भके ॥

पृथुका। स्त्री॰ हिङ्गुपत्न्याम् ॥ बालिकायाम् ॥

पृथुकोल। पु॰ राजबदरे ॥

पृथुच्छद'। पु॰ हरिदर्भे ॥ त्रि॰ बृहत्पत्रे ॥

पृथुपत्र। पु॰ रक्तलशुने ॥ हरिदर्भे ॥

पृथुपलाशिका। स्त्री॰ शट्याम् ॥

पृथुरोमा। पु॰ मत्स्ये ॥ पृथूनिमहान्तिरोमाण्यस्य। रोमशब्देनपक्षोच्चे तिस्वामी। बल्कलमितिसर्वधर ॥ त्रि॰ बृहल्लोमयुक्ते ॥

पृथुल। त्रि॰ विशाले ॥ पृथुपृथुत्वमस्यास्ति। सि॰लच् ॥ पृथुपृथुत्वलातिवा। क ॥

पृथुला। स्त्री॰ हिङ्गुपत्न्याम् ॥ टाप्

पृथुशिम्ब। पु॰ श्योनाकप्रभेदे ॥

पृथुशेखर। पु॰ पर्वते ॥ पृथुर्महान्शेखरोऽस्य ॥

पृथुसेन। पु॰ राज्ञि ॥ पृथ्वीसेनायस्य ॥

पृथुस्कन्ध। पु॰ शूकरे ॥

पृथूदकम्। न॰ तीर्थविशेषे प

पृथूदर'। पु॰ मेषे ॥ त्रि॰ बृहत्कुक्षौ ॥

पृथ्वी। स्त्री॰ भूमौ। अचलायाम्। धरायाम् ॥ स॥ त्वहल्याम्कृपल्याम् हिङ्गु॥ल्याम् ॥ कृष्णजीरके ॥ ब्रह्मा र्ण्डमातरि ॥ बृहदेलायाम् ॥ पुनर्नवायाम् ॥ प्रथते प्रथविस्तारे॰ प्रख्यानेवा। प्रथिम्रदिभ्रस्जासम्प्रसारणमितिकु। वोतोगुणवचनादिति ङीष् ॥ वर्णवृत्तविशेषे। तल्लक्षणं यथा। जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरिति ॥ अपिच। पयोधरयुतास्फुरत्कनकयुग्मताटङ्किनीसुवर्णरुचिकङ्कणाललितभावबन्नूपुरा। सुवर्णरुचिरालसक्कवचारुपवत्कुण्डलाभुजङ्गपतिवर्णिताहरतिहन्तपृथ्वीमम ॥ यथा। चलाधरतटीघनस्वसितमङ्गरागव्ययोहृशोरपिचशोणिमाभवतिकारणादन्यत। इदतवपरप्रियानिभृतसङ्गमव्यञ्जकमुखेयदिदमञ्जनरहसिचार्द्धचन्द्रगले ॥

पृथ्वीका। स्त्री॰बृहदेलायाम् ॥ कृष्णजीरके ॥ कालाजाज्याम् ॥ हिङ्गुपत्न्याम् ॥ प्रथते। प्रथप्रख्याने। फर्फरीकादयश्चेतिसाधु ॥

पृथ्वीकुरबक। पुं॰ श्वेतमन्दारे ॥

पृथ्वीजम्। न॰ गडलवणे ॥

पृदाकु । पुं० वृश्चिके ॥ व्याघ्रे ॥ सर्पे ॥ चित्रके ॥ पर्दते । पर्द० । पर्देर्निःसम्प्रसारणमल्लोपश्चेतिकाकुप्रत्ययः ॥

पृश्नि । स्त्री० रश्मौ ॥ त्रि० अल्पतनौ ॥ स्पृशति स्पृश्यतेवा । स्पृशसंस्पर्शे । घृपृश्नीतिसाधुः ॥ पृच्छति०पृच्छ्यतेवा । पर्षति०पृष्यतेवा । प्रच्छज्ञीप्सायाम् । पृषुसेचनेवा । पूर्ववत्साधुः ॥

पृश्निका । स्त्री० कुम्भिकायाम् ॥

पृश्निगर्भ । पुं० गदाग्रजे । श्रीकृष्णे ॥

पृश्निपर्णी । स्त्री० पृथक्पर्ण्याम् । अङ्घ्रिवल्लिकायाम् । चकरीत्० हू० पिठवनि० हू० च० भा० । चाकुलिया० हू० गौ० भा० ॥ पृश्निपर्णीत्रिदोषघ्नीवृष्योष्णामधुरासरा । हन्तिदाहज्वरश्वासरक्तातीसारतृड्वमी ॥ पृश्निरल्पपर्णमस्याः । पाककर्णेतिङीष् ॥

पृश्निभद्र । पुं० श्रीकृष्णे ॥

पृश्निशृङ्ग । पुं० विष्णौ ॥ गणेशे ॥

पृश्नी । स्त्री० वारिपर्ण्याम् ॥

पृषत् । पुं० मृगे ॥ न० बिन्दौ ॥ त्रि० श्वेतबिन्दुयुक्ते ॥ पर्षति । पृषुसेचने । वर्त्तमानेपृषद्बृहन्महदिति अतिप्रत्ययोगुणाभावश्चनिपात्यते । शतृवदस्यकार्यम् ॥

पृषत । पुं० पृषाकमृगे । चित्रमृगे ॥ यथा । पृषतश्चन्द्रबिन्दुः स्याद्धरिणा त्किञ्चिदल्पकः ॥ पृषतस्तुभवेत्स्वादुर्ग्राहकः शीतलोलघुः । दीपनोरोचनः श्वासज्वरदोषत्रयास्रजित् ॥ स्त्रुति ॥ बिन्दौ ॥ त्रि० श्वेतबिन्दुयुक्ते ॥ पर्षति । पृषु० । पृषिरञ्जिभ्यांकिदित्यतच् ॥ यथा । पृषता बिन्दवः सन्त्यस्य । अर्शआद्यच् ॥

पृषताम्पति । पुं० वायौ ॥

पृषताश्व । पुं० वायौ । अनिले ॥ पृषतोमृगविशेषोऽश्वोवाहनमस्य ॥

पृषती । स्त्री० मृग्याम् ॥

पृषत्क । पुं० बाणे । शरे ॥ पर्षति पृषु० । लट शतृ । संज्ञापूर्वकत्वान्नगुणः ॥ यद्वा । वर्त्तमाने पृषन्महदिति साधुः । स्वार्थेकन् ॥

पृषदश्व । पुं० गन्धवहे । पवने । वायौ ॥ पृषन्मृगभेदोऽश्वोवाहनमस्य ॥ पृषतामम्बुकणानामश्वइवेतिवा ॥

पृषदाज्यम् । न० सदध्याज्ये । दधिमिश्रितघृते ॥ पृषच्चतदाज्यञ्च ॥ यद्वा । पृषद्भिः सहितमाज्यम् ॥

पृषद्बल । पुं० वायुश्वे ॥

पृषन्ति । पुं० बिन्दौ ॥ यथा । पयःपृषन्तिभिः स्पृष्टा वान्ति वाताः शनैः शनैरिति जाम्बवतीविजयकाव्यम् ॥

पृषभाषा । स्त्री० इन्द्रपुर्याम् ॥

पृषाकरा । स्त्री॰ क्षुद्राश्मनि । वट खराद्रि॰ भा॰ ॥

पृषातकम् । न॰ सदध्याज्ये ॥

पृष्टम् । न॰ सामगानामाध्यन्दिन सवनेगीयमानस्तोत्राणामभिधेये ॥ त्रि॰ कृतप्रश्ने । उपामन्त्रिते ॥ पृच्छ क्त ॥

पृष्टव्य । त्रि॰ जिज्ञासिते ॥

पृष्ठम् । न॰ शरीरपश्चाद्भागे । पार्श्व स्थाने । पीठ॰ इ॰ भा॰ ॥ अश्वशु भाशुभलक्षणयथा । सुस्निग्ध मास लपृष्ठमभग्नञ्चाप्यरोमशम् । सध मार्नाविपर्यस्त निर्द्दनानाप्रकीर्त्ति तमितिसमुद्र ॥ चरममात्रे ॥ पृष्यते । पृषु॰ । तिथपृष्ठगूथेति साधु ॥ स्तोत्रविशेषेपिपृष्ठम्॰ त्रि वाधिकरणे॰ पृष्ठे, स्तुवतइत्यादौ तथानिर्णयात् ॥

पृष्ठग्रन्थि । पुं॰ गडौ । कूब॰ इ॰ भा॰ ॥

पृष्ठत । अ॰ पश्चात् । पृष्ठदेशे ॥ पृष्ठइति । आद्यादित्वात्तसि ॥

पृष्ठदृष्टि । पु॰ भल्लूके ॥

पृष्ठमासाद । त्रि॰ परोक्षेदोषाभि धायिनि ॥ वाक्याभिधायिनि ॥ इ॰ चिकाणइशेष ॥

पृष्ठमांसादनम् । न॰ परोक्षेदोषकी र्त्तने ॥ त्रि॰ तद्वति ॥

पृष्ठवंश । पु॰ रीढके । पृष्ठास्थि नि ॥ सतुगर्भेमासमात्रेवाभवति ॥

पृष्ठवह । पु॰ पृष्ठ्याश्वे ॥

पृष्ठवास्तु । न॰ गृहस्योपरिगृहे ॥

पृष्ठवाट्॰ड् । पु॰ युगपार्श्वगवृषे । पृष्ठवाहिनि ॥

पृष्ठवाह । पु॰ ] वृषे ॥
पृष्ठवाहक । पु॰ ]

पृष्ठवाह्य । पु॰ भारवाहकवृषे । स्त्रीरियि । पृष्ठि ॥

पृष्ठशृङ्ग । पु॰ वनच्छागे ॥

पृष्ठशृङ्गी । पु॰ भभीरौ । सैरिभे ॥ शंढ । भीमसेने । वृकोदरे ॥

पृष्ठहायन । पुं॰ धान्यविशेषे ॥ मत कुणे ॥

पृष्ठी । पुं॰ मत्स्यविशेषे ॥

पृष्ठोदय । पुं॰ राशिविशेषे ॥ मेषो- वृषकर्कटधनुर्मकरश्च । पृष्ठो- दया पश्चैवेसमीनेद्यापितथैवच ॥

पृष्ठ्य । पुं॰ स्त्रीरियि । पृष्ठेनभारवह नशीलेघोटके ॥ न॰ पृष्ठक्रन्दे ॥ य- ज्ञविषयेऽदः स्मरन्ति ॥ पृष्ठ्यानास मूह । पृष्ठ्यम् ॥ प्रशस्तमतिश यितपृष्ठमस्य । अर्श्आद्योपीतियद्वा

पृश्नि । पुं॰ सूर्ये ॥

पृश्निका । स्त्री॰ { जलकुम्भ्या
पृष्णी । ...

पेचक । पु॰ उलूके ॥ काकशत्रौ । कौशिके ॥ घूके ॥ गजलाङ्गूल मूले । तज्जलोर्ध्वाङ्गकामासविरुडवि

प्रेषे ॥ पचति० पच्यतेवा० दु वर्ख न । डुपचष् ० ॥ पचिमच्योरिञ्चो-पधायाइतिवुन् । अतइत्त्वम् । पु गन्ते तिगुण पर्यङ्क ० मेषि० । यूके ॥

पेचकी । पु० हस्तिनि ॥

पेचिल । पु० गजे । हस्तिनि ॥

पेचु । न० पेचुल्याम् ॥

पेचुकम् । न० नाडीचशाके पेचुल्याम् ॥ त्रिकाण्डशेषेकेचुकमितिपाठ

पेचुली । स्त्री० पेचुनि । नाडीचशाके

पेट । पु० प्रहस्ते । पेटति । पिट० । प० अच् ॥

पेटक । पु० न० पिटके । पुस्तकादीनामञ्जूषायाम् । पिटार० इ० भा० ॥ त्रि० कदम्बके । समूहे ॥ पेटति । पिटशब्दसंघातयो । ण्वुल् ॥

पेटाक । पु० पेडायाम् । पेटके ॥

पेटिका । स्त्री० वृक्षविशेषे० । कुबेराच्याम् । कृष्णदन्तिकायाम् ॥

पेटी । त्रि० पेटके ॥

पेडा । स्त्री० पेटके । मञ्जूषायाम् । बृहत्पेटाके ॥ पिण्डते । पिडिसंघाते । प० अच् । अनित्यत्वान्नुम् ॥

पेत्वम् । न० अमृते ॥ घृते ॥ पीयते । पा० । अन्येभ्योपिदृश्यतइति० क्वनिप् ॥

पेपीयमान । त्रि० अत्यासक्त्यापीयमाने ॥

पेयम् । न० पयसि । जले ॥ दुग्धे ॥ मद्ये ॥ अष्टविधान्नान्तर्गतान्नविशेषे । यथा। भोज्यपेयतथाचूष्यलेह्यखाद्यच चर्वणम् । निष्पेयञ्चैवमत्यन्नं स्यादष्टविधसम्मतम् ॥ इ० टा० त्रि० ॥ त्रि० पानयोग्यद्रव्ये । पातव्ये ॥ पातुंयोग्यम् । पा० । यत् । ईद्यति । गुण ॥

पेया । स्त्री० आचामाम् ॥ मण्डसिक्थसमन्वितपेयद्रव्ये ॥ पेया विधिर्गुणाश्च । चतुर्दशगुणेनीरेसिद्धाल्प्यादिभिः कृता । द्रवाधिका-स्वल्पसिक्थापेयाप्रोक्ताभिषग्वरैः ॥ साविण्मूत्रग्राहिणीलघ्वीक्षुद्विविधायिनी ॥ ज्वरघ्नीजननीशीयावातानुलोमिनी । शुण्ठीसैन्धवसंयुक्ताग्निदीपनीपाचनीचसा ॥ आमशूलहरीक्ष्यास्याह्निमन्थविनाशिनी ॥ पातुंयोग्या । पा० । यत् । ईद्यति । टाप् ॥

पेयूष । पु० न० अमृते ॥ नव्यदुग्धे । सप्तदिवसावधिक्षीरे ॥ आसप्तरात्रप्रसवात्क्षीरपेयूषउच्यते ॥ पीयते० पीयतेऽनेनवा । पीयइतिसौत्रोधातुः प्रीतौ । पीयेरूषन् । बहुलवचनात् पुगागमः ॥ अग्निसंयोगात्कठिनतागतेऽजप्रसूताया गोक्षीरे ॥ क्षीरंतत्कालसूतायाघन

पियूषमुच्यते ॥ नश्यश्रुते ॥

पेरु । पुं० सूर्ये ।। वह्नौ ॥ समुद्रे ॥ पीयते । पीङ् पाने । निपीभ्या रु ॥

पेरोजम् । न० उपरत्नवि० । पेरजै । पिरोजा० इ० भा० ॥ तद्गुणविधम् । भस्माङ्गहरितञ्च । तद्गुणा । पेरोजसुकषायस्वाम्ममधुरदीपनपरम् । स्थावरजङ्गमञ्च वसयोगाच्चयथा विषम् ॥ तत्सर्वनाशयेच्छीघ्र शूलभूतादिदोषजम् । पाठान्तरम् यथा ॥ पेरोजसुकषायस्वाम्मधुरदीपनदयो । स्थावरादिविषघ्न स्याङ्गरितच्चापरं गुणा ॥ शीताङ्गनाशयेच्छीघ्र शूलतिमिरभूतजम् ॥ इ० रा० नि० ॥

पेलम् । न० अण्डकोषे ॥

पेलवम् । त्रि० विरले ॥ अचसावक्ता शत्व प्रकार . ॥ पेलनम् । पिलभेदने । घञ् । पेलोस्यास्ति । अन्येभ्योपीतिव . ॥ कोमले कृशे ॥

पेवलि । स्त्री० नृत्यविशेषे ॥ यथा । ताण्डवञ्चतथालास्य द्विविधनृत्यमुच्यते । पेवलिर्वहुरूपाचताण्डवद्विविधमतम् ॥ अङ्गविक्षेपबाहुल्य तथाभिनयशून्यता । यत्रसापेवलिस्तस्या सज्ञादेशीतिलोकत ॥ छेदनभेदनयत्रबहुरूपासुखावली ॥ ताण्डवबहुरूपन्तञ्चारुणागलमुज्ञतमिति ॥

पेशलम् । न० सौकुमार्ये ॥ त्रि० रुचिरे । रम्ये । चारौ । सुन्दरे ॥ दक्षे । कुशले । चतुरे ॥ कोमले ॥ पिशअवयवे । भावेघञ् । पेशलाति । ला० । क ॥ वा० पिशिरलज्वा ॥ पेशोस्यास्ति । सिध्मादित्वालज्वा ॥ धूर्ते ।। कर्मणामन्सावाचावपुषाचशोभनत्वात् ०पेशलोविष्णुर्वासुदेव ॥ तथाविधोन्योपि ॥

पेश । न० रूपे ॥

पेशस्कृत् । पु० हस्ते ॥ कीटवि० । किमिरकी० इ० गौ० भा० ॥

पेशि । पु० शतकोटौ । वज्रे ॥ स्त्री० अण्डे ॥ पिशिअवयवे । इपिशिरुहिवर्तीत्यादिना० इन् ॥ मांसविदले ॥

पेशी । स्त्री० सुपक्वकलिके ॥ मांसाम् ॥ अण्डभेदे ॥ कृदिकारादक्तिन इतिङीष् । गौरादिर्वा ॥ पिशाच्याम् ॥ राक्षसीभेदे ॥ नदीविशेषे ॥

पेशीकोष । पुं० पक्षिडिम्बे । अण्डे ॥ पेशीनामांसखण्डाना कोषोभाण्डागारइतिस्वामी ॥

पेषणम् । न० चूर्णने । पिष्लृसचूर्णने भावेल्युट् ॥ खले ॥ स्नुहीद्रुमे ॥

पेषणि : । स्त्री० } पेषणशिलायाम् ।
पेषणी : । } दृषदुपलात्मि-

कायाम् । पट्टे । ग्रहरुच्छपि । सि
ल० कू० भा० ॥

पैत्रस . । त्रि० पेशले ॥

पैषाक्ष ' । पु० पेषस्थाम् ॥

पैशुष । पु० कर्णे ॥

पैठर : । त्रि० उख्ये । स्थालीपक्वमा
सादौ ॥ पिठरेसंस्कृतम् । संस्कृतभक्षा
दूत्यण् ॥

पैठीनसि . । पुं० स्मृतिकारकमुनि
विशेषे ॥

पैण्डिन्यम् । न० भैक्षजीविकायाम् ॥

पैतामहम् । त्रि० पित्र्ये । पितामह
सम्बन्धिधनादौ ॥ पितामहस्येदम्
। तस्येदमित्यण् ॥ स्त्रियांपैतामही

पैतृकम् । त्रि० पितृसम्बन्धिनिधनादौ
॥ सुखेनस्थीयतेयत्रसदेश खलुपै
तृक ॥ पितुरागतम् । पितुर्यच्चे
तिचकाराट्ठञ् ॥ ङीपि०पैतृकीवि
द्या ॥

पैतृकभूमि स्त्री०।पितृसम्बन्धिस्थाने॥

पैतृष्वसेय । त्रि० पितुर्भगिनीसन्त
तौ॥ पितृष्वसुरपत्यम् । ढकिलोप
। अतएवज्ञापकाड्ढक् ॥ स्त्रियांपैतृ
ष्वसेयी ॥

पैतृष्वस्रीय । त्रि० पितुर्भगिनेये ।
पैतृष्वसेये ॥ पितृष्वसुरपत्यम् ।
पितृष्वसुश्छण् ॥

पैत्त : । त्रि० पैत्तिके ॥

पैत्तिकम् । त्रि० पित्तजव्याधौ । पि-
त्तसम्भवे ॥ पित्तस्यशमनकोपनवा
वातपित्तश्लेष्मभ्य शमनकोपनयो
रितिठञ् ॥

पैत्रम् । न० पितृतीर्थे । तर्जन्यङ्गुष्ठयो
र्मध्ये ॥ पितॄणामिदम् । तस्येद
मित्यण् ॥ त्रि० पितृसम्बन्धिनि ॥

पैत्राहोरात्र . । पुं० पितृलोकस्यदि
वारात्रौ । नृणांमासि ॥ कृष्णपक्ष
पितॄणांदिनम्०शुक्लपक्षोरात्रि ।
पितॄणामयम्०पैत्र : । पैत्रश्चासा
वहोरात्रश्च ॥

पैत्र्य । पु० देवसर्गप्रभेदे ॥

पैप्पलम् । त्रि० पिप्पलकाष्ठे ॥ पि-
प्पलभस्मनि ॥ पिप्पलस्यावयवोवि
कारोवा । अवयवेचेत्यण् ॥

पैल । पुं० ऋषिविशेषे । ऋग्वेदधा
रकेव्यासशिष्ये ॥ पीलायाअपत्यम्
। पीलायावेत्यण् ॥

पैलेय । पु० पैले ॥ पीलायाअपत्य
म् । अणभावे० द्व्यचइति० ढक् ॥

पैशाच । पु० अष्टप्रकारविवाहान्त
र्गताष्टमेविवाहे ॥ पैशाच . कन्य-
काछलात् । छलमाश्रमनु । सुप्ता
मत्ताप्रमत्तांवारहोयत्रोपगच्छति ।
सपापिष्ठोविवाहानांपैशाचश्चाष्टमो
धम ' ॥ पिशाचस्येवायम् । अण् ॥
पिशाचएववा । स्वार्थिक . प्रज्ञाद्य
ण् ॥ देवसर्गविशेषे ॥ त्रि० पिशाच
सम्बन्धिनि ॥

पैशाचिक . । त्रि० पिशाचसम्बन्धिनि ॥

पैशुनम् । न० परस्मै परोक्षपरदोषप्रकाशने ॥ पिशुनस्य कर्म भावो वा । युं० । अण्० ॥

पैशुन्यम् । न० अविज्ञातदोषाविष्करणे । पिशुनतायाम् । खलतायाम् ॥ पिशुनस्य दुर्जनस्य कर्म भावो वा । ब्रा० ष्यञ् ॥ परोक्षे परदूषणकथने ॥ गुरुनृपतिबन्धु भ्रातृमित्रसकाशेष्वर्थोपघातार्थं दोषोपाख्यानं पैशुन्यमितिवदन्ति ॥

पैष्ट । त्रि० पिष्टसम्बन्धिनि ॥

पैष्टिकम् । न० मद्यविशेषे ॥ पिष्टानां समूहे ॥

पैष्टी । स्त्री० विविधधान्यविकारजायां मदिरायाम् । वारुण्याम् ॥ पैष्टी कटूष्णतीक्ष्णास्या दीपन्नी डीसमा परा । वातहृत्कफकृत्त्वीषत्पित्तकृन्मोहनी च सा ॥ पिष्टस्येयम् । तस्येदमित्यण् । ङीप्

पोगण्ड । पुं० बालके ॥ बाल्यापोडशाद्वर्षात् पोगण्ड सापिशब्दित इतिनारद ॥ दशवर्षीयवालके । त्रि० विकलाङ्गे ॥ पवते पुनाति वा । विच् । पोगण्ड एकदेशोस्य ॥

पोट : । पुं० वेश्मभूमौ । वास्तौ ॥

पोटगल. । पुं० नले । नरकट० नरसल० इ० भा० ॥ काशे । इक्षुगन्धायाम् । काँस० इ० भा० ॥ मत्स्यविशेषे ॥ पोटेन स्वस्मै गलति । गलयद्भे० स्तव ग्रेच । अच् ॥

पोटा । स्त्री० स्त्रीपुंसलक्षणायाम् । स्त्रीपुंसयो स्तनश्मश्रु रहित चिह्नयुक्तायाम् योषिति ॥ पोटयति । पुट भाषार्थं चुरादि । पचाद्यच् ॥ दास्याम् ॥

पोट्टली । स्त्री० पोट्टलिकायाम् । पोटली० इ० भा० ॥ यथा । शुद्ध्यर्थं त्रिफलाक्वाथे गुडूच्याः क्वाथ एवकौ । दोलायन्त्रे पुरः पाच्यः पोट्टल्या वस्त्रबद्धया ॥

पोडु । पुं० कपालास्थितले ॥

पोत । पुं० शिशौ ॥ वस्त्रे । समुद्रतरणार्थं नौकाविशेषे । समुद्रयाने । वार्वटे । अर्थाङ्गा० जहाज० इ० आधुनिकभाषा ॥ यथा । समुद्रयानैरत्नानि महामौल्यानि साधुभि । रत्नपारीक्षकै सार्द्धमानयिष्ये बहूनि च ॥ शुकेन सह सम्प्राप्तो महान्तं लवणार्णवम् । पोतारूढा स्तत सर्वे पोतवाहैरुपास्थिता ॥ अपारे दुस्तरेऽगाधे याति वेगेन निश्चय । इ० वाराहे गोकर्णमाहात्म्याध्याय ॥ पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे इत्यादि ॥ गृहस्थाने । पोता० इ० गौ० भा० ॥ करिशि ॥ दशवर्षीयगजे ॥ पुनाति० पूयते

रके ॥

पोली । स्त्री० पिष्टकवि० । पूपाख्या म॒ल चर्पव्याम् ॥

पोष । पुं० पोषणे ॥

पोषक । त्रि० पालनकर्त्तरि ॥

पोषणम् । न० पुष्टौ । पुषपुष्टौ ॥ ल्युट् ॥ भृतौ ॥

पोषयित्नु : । पु० कोकिले ॥ भर्त्तरि ॥ स्त्रियां ॥ त्रि० पोषके । पोषणक र्त्तरि ॥ पोषयति । पुष० । स्तनि हृषिपुषीत्यादिना० इत्नुच् ॥

पोष्टा । पुं० पूतीके । काँटाकरञ्ज० इ० गौ० भा० ॥ त्रि० पोषणकर्त्त रि ॥ पुष्णाति । पुष० । तृच् ॥

पोष्टृश्र । त्रि० पोषकश्रेष्ठे ॥

पोष्य । त्रि० प्रतिपाल्ये । पोषणी ये । अवश्यसम्वर्धनीये पोष्यवर्गे ॥

पोष्यपुत्र : । पु० पुत्रप्रतिनिधौपाल नासुतत्व प्राप्ते ॥

पोष्यवर्ग । पुं० परिजने । प्रतिपाल नीयगणे ॥ यथा मातापितागुरु पत्नीत्वपत्यानिसम।श्रिता । अभ्या गतोऽतिथिश्चाग्नि . पोष्यवर्गाच- मीमव ॥

अपिच । मातापितागुरुर्भ्राताप्रजा दीना , समाश्रिता । अभ्यागतो तिथिश्चाग्नि पोष्यवर्गउदाहृत . ॥ भरणपोष्यवर्गस्य प्रशस्त स्वर्गसाधन म् । नरकपीडनेचास्तस्माद्यत्नेन तभरेत् ॥ पोष्याणावर्ग ॥

पौंसवनम् । न० पुंसवनसंस्कारे ॥

पौंस्नम् । न० पुंस्त्वे ॥ पुंसइदम् । स्त्रीपुंसाभ्यानञ्स्नञौ भवनादिति स्नञ् ॥ त्रि० पुंसुभवे ॥ स्त्रियांपौं स्नी ॥

पौगण्डम् । न० पञ्चाब्दादनन्तरदशाब्द पर्यन्तायामवस्थायाम् ॥ यथा । कौमारपञ्चमाब्दान्तपौगण्डदशमा वधि । कैशोरमापञ्चदशात्यौवन न्तुततः परमिति ॥ आचार्यप्रमुखा नाङ्क्पौन पौन्धंमतेर्मतौ । यतो गण्डावस्थतेनपौगण्ड ' सम्मतोबु धैरित्युक्तेस्तदवस्थावति । त्रि० ॥

पौण्डरीकम् । न० प्रपौण्डरीके ॥ पु- ण्डरीकमिव । शर्करादिभ्योऽण् ॥

पौण्डर्यम् । न० ओषधीभेदे । स्थलप- द्मे । प्रपौण्डरीके ॥ पौण्डर्यंमधुरं तिक्तकषायशुक्रलहिमम् । चक्षुष्यं मधुरपाकिवर्ण्यं पित्तकफास्रनुत् ॥

पौण्ड्र । पु० चदेली० इ० प्र० देशे ॥ भीमसेनस्यसङ्ख्ये ॥ पौंडा० इ० प्र० इक्षुविशेषे ॥ पुण्डाते । पुडिखण्डने । स्फायीतिरक् । प्र- ज्ञाद्यण् ॥

पौण्ड्रक । पुं० श्वेतपौंडा० इ०प्र० इक्षौ ॥ वातपित्तप्रशमनोमधुरोर- सपाकयो : । सुशीतोबृंहणोबल्य पौण्ड्रकोभीरुकस्तथा ॥ पौण्ड्रदेशो

ह्नविआदौचचिये पश्चाहिष्टितक्रिया लोपादिनाशुद्वत्त्वमापन्ने दसुपदवाच्ये आभ्यन्तरे ॥ पौण्डिकायामवे- ग्रयाज्जातेआतिवि० । पुण्डी० इ० गौ० भा० ॥ पुण्ड्रएव । स्वा० कन् ॥

पौण्ड्रवर्द्धन । पु० देशवि० । विशार० इ० भा० ॥

पौण्ड्रिक: । पुं० पुण्ड्रेच्चौ । सेव्ये । अतिरसे ॥

पौतिमाष्य । पुं० वेदप्रसिद्धेऋषिविशेषे ॥ पूतिमाषस्यगोत्रापत्यम् । गर्गादिभ्योयञ् ॥

पौत्तिकम् । न० घृतवर्णेमधुनि ॥ या कृष्णामशकोपमालघुतरा ' प्रायो- महापिण्डिकावघ्नानासरुकोटरा- न्तर्गता . पुष्पासवकुर्वते । तास्तज्जैरिहपुत्तिकानिगदितस्ताभि कृत सर्पिषातुल्य यन्मधुतद्वनेचरजनै ' सकीर्तितपौत्तिकम् ॥ पौत्तिकंमधु रूक्षोष्ण पित्तदाहास्रवातकृत् । वि दाहिमेहकृच्छ्रघ्न ग्रन्थ्यादिक्षतशो- षिषु ॥ पुत्तिकाभि कृतम् । सज्ञायामित्यण् ॥

पौत्र । पुं० पुत्रस्यपुत्रे । नप्तरि । पोता० इ० नाती इ० भा० ॥ पु- त्रस्य०पुत्र्याश्चापत्यम् । अनृष्यानन्तर्येविदादिभ्योऽञ् ॥ न० पोतुर्भावकर्मणो . ॥ उद्० अञ् ॥

पौत्रिकेय । त्रि० पुत्रिकातनये ॥

पौत्री । स्त्री० पुत्रसुतायाम् । नप्त्याम् ॥ पुत्रस्यपुत्र्याश्चस्त्र्यपत्यम् । अञन्तत्वान्ङीन् ॥

पौन . । पुनिक त्रि० पुन पुनर्भवे ॥ कालाट्ठञ् ॥

पौन पुन्यम् । न० आभीक्ष्ण्ये । पु- न पुनरित्यस्मिन्नर्थे ॥ पुन पुनरित्यस्यभाव । ष्यञ् । अव्ययानाभमात्रेटिलोपस्य०प्रातिपदिकाद्यर्थ उपसख्यानमितिटिलोप ॥

पौनरुक्तिक । पु० पुनरुक्तमधीयाने ॥ उ० ठक् ॥

पौनर्नवम् । न० पुनर्नवाशाके ॥

पौनर्भव । पु० द्वादशविधपुत्रान्तर्गतपुत्रवि० । पुनर्भूपुत्रे ॥ अपत्यर्थेऽण् ॥ यापत्यावापरित्यक्ताविधवावास्वयेच्छया । उत्पादयेत्पुनर्भूत्वास- पौनर्भवउच्यते ॥

पौरम् । न० कतृणे । रौहिषतृणे । रामकर्पूर० इ० ख्याते॥ त्रि० नागरे । पुरोद्भूते ॥ पुरेभवम् । तत्रभवइत्यण् ॥

पौरक . । पुं० गृहवाह्योपवने ॥ नि- ष्कुटस्तुगृहारामोवाह्यारामस्तुपौरक ' ॥ इतिहेमचन्द्र ॥

पौरन्दर . । पु० पुरन्दरापत्ये॥ त्रि० पुरन्दरसम्बन्धिनि ॥ अण् ॥

पौरन्दरी । स्त्री०पुरन्दराधिष्ठितदिशि

पौरव ' । पु० दुष्यन्तनृपतौ । पुरोरप

• । सएवपौरोडाश ।
ानस्तम्भवोवा । पौरो-
ाशात्ष्ठन् ॥
। न० पुरोभागिन क-
ष्यञ् ॥
। न० पुरोहितस्यकर्म-
। पत्यन्तपुरोहितादिभ्यो

पु० पौर्णमास्याक्रियमा
ष्टेषि ॥ पौर्णमास्याभव ।
ष्टृतुनक्षत्रेभ्योण् ॥
स्त्री० पूर्णिमायाम् ॥
ायस्याम्। बहुव्रीहौकृते०
साम्मिन्पौर्णमासीति-
॥ यद्वा । पूर्णमासोऽ
इति । पूर्णमासादण्-
इत्यण् । ङीप् ॥
। त्रि० पूर्वदेहभवे ॥
। त्रि० पूर्वपद्याहित्थि।
णाति । पदोत्तरपदंग्र
ठक् ॥
कार्यकारणभावे ॥ सा
ावे ॥
त्रि० पूर्वाह्णभव ।
र्वाह्णापराह्णाभ्यामिति
।
ु० कुबेरे ॥ रावणे
णे । पुलस्तेर्गोत्रापत्य
ादिभ्योयञ् ॥ बहुत्वे

पुलस्त्य ॥ रावणे ॥
पौलि । पु० आपक्वे । भर्जितेइरित
यवादौ ॥ पोलति । पुलमहत्त्वे ।
ज्वलादित्वात्ण । पौलिननिवृत्त
। सुतङ्गमादित्वादिञ् ॥
पौलुषि । पुं० सत्ययज्ञे ॥ पुलुष
स्यापत्यम् । इञ् ॥
पौलोमी । स्त्री० इन्द्राण्याम् ॥ पुलो
म्नोमुनेरपत्यं स्त्री । तस्यापत्यमि
त्यण । गोत्रत्वेनजातित्वान्ङीष्॥
पौष । पु० तैषे । सहस्ये । हैमने
॥ तत्रजातफलम् । निगूढमन्त्र
सुकृषाङ्घ्रयष्टि परोपकारीपिटवि
सद्दीन । कष्टान्वितार्थं व्ययकृद्वि
धिज्ञ . पौष प्रसूत : पुरुष :
सुधीर ॥ पौषीपौर्णमास्यस्मिन्
। सास्मिन्पौर्णमासीत्यण् ॥ न०
मद्दे ॥ युद्धे पुष्ययुक्तेऽह्नि ॥
पौषी । स्त्री० पुष्ययुक्त पौर्णमास्याम्
॥ पुष्येणयुक्तापौर्णमासी । नक्षत्रे
णयुक्त कालइत्यण् तिष्यपुष्य
योर्नक्षत्राणियलोप । ङीप् ॥
पुष्येणयुक्तायांरात्रौ ॥
पौष्करम् । न० पुष्करमूले ॥ पौष्क
रकटुक तिक्तमुष्ण वातकफज्वरान्
।हन्तिशोथ।रुचिश्वासान्विशेषात्
पार्श्वशूलनुत् ॥
पौष्करिणी । स्त्री० पुष्करिण्याम् ॥
पौष्टिकम् । न० पुष्टि त्यादककर्मणि

॥ चीरसमयेमाच्छादनवस्त्रविशेषे। कावाद्र० द्र० गौ० भा० ॥
पौष्ण । पु० सूर्यपुत्रे ॥ न० रेवतीनक्षत्रे ॥
पौष्पयम् । वि० पुष्पयनिर्मिते ॥
पौषकम् । न० धातुप्रभेदे। रीतिपुष्पे ॥ पुष्पस्यप्रतिकृति । इवेप्रतिकृतावितिकन्। तत स्वार्थे० अण् ॥
पौष्पी । स्त्री० पुष्पपुरे। पटना० द्र० भा० ॥
प्याट् अ० हे। भो । सम्बोधने ॥ प्यायते । प्यैङ्वृद्धौ टप्रत्यय
प्र । अ० प्रकर्षे ॥ गताद्यर्थे ॥ प्रआदिकर्मदीर्घेशेभृशसम्भवतृप्तिषु। वियोगशुद्धिशक्तीच्छाशान्तिपूजाग्रदर्शने ॥ यथा आदिकर्मणि० प्रयात । दीर्घे० प्रबलामूषका । ईशे० प्रभुर्देशस्य। भृशार्थेप्रवर्द्धितादाद्रा,। सम्भवे० हिमवतोगङ्गाप्रभवति। तृप्तौ० प्रभुक्तमन्नम् । वियोगे० प्रोषित. शुद्धौप्रसन्नमुदकम्। शक्तौ० प्रशक्तोविप्राय । इच्छायाम्० प्रार्थयतेकन्याम् । शान्तौ० प्रशान्तोग्नि । पूजायाम्० प्राञ्जलि स्थित. अग्रे० प्रवालम् । दर्शने प्रलोकयति । इत्यर्थं ॥
प्रकट । वि० व्यक्ते। नि सन्दिग्धे भातीतिव्यवहारगोचरे । स्पष्टे ॥ उद्भूते ॥ सम्प्रोदश्चेतिप्रशब्दात् स्वार्थेकटच् प्रत्यय ॥
प्रकटित । वि० प्रकाशिते ॥
प्रकटोदितम् । न० विस्पष्टवाक्ये ॥
प्रकण्व । पु० देशविशेषे ॥
प्रकथनम् । न० प्रकर्षेणप्रतिपादने ॥ यथागाथा प्रकुरुते। प्रकथयतीत्यर्थ । गन्धनावक्षेपणेतिप्रकथने आत्मनेपदम् ॥
प्रकम्पन : । पु० वायौ ॥ नरकविशेषे ॥ न० कम्पातिशये ॥
प्रकर । पु० समूहे। सङ्घे ॥ विकीर्णकुसुमादिषु ॥ न० जोङ्के ॥ प्रकीर्यते कृविक्षेपे। ऋदोरप् ॥
प्रकरणम् । न० प्रस्तावे ॥ यथा । भोजनप्रकरणे सैन्धवमानयेतिलवणे प्रतीतिगमनप्रकरणे तुत्वश्वे प्रतीतिर्भवतीति ॥ रूपकभेदे । अभिनेयप्रकारे ॥ विश्रामे ॥ ग्रन्थसन्धौ । ग्रन्थस्यविच्छेदे ॥ तल्लक्षणं यथा । शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरेस्थितम् । आहु प्रकरणानामग्रन्थभेदविपश्चित : ॥ अत्र मीमांसका ॥ विनियोगविधेसहकारिभूतेषुषट्सुप्रमाणेषुचतुर्थप्रमाणे ॥ उभयाकाङ्क्षाप्रकरणम् । यथा । प्रयाजादिषुसमिधोयजती

त्यादिवाक्ये फलविशेषस्यानिर्देशात् समिद्यागेनभावयेदितिबोधानन्तरं किमित्यस्य प्रकार्याकाङ्क्षा। दर्शपूर्णमासवाक्ये पिदर्शपूर्णमासाभ्यास्वर्गंभावयेदितिबोधानन्तरकथमित्यस्य प्रकारकाकाङ्क्षा। इत्थचोभयाकाङ्क्षयाप्रयाजादीनादर्शपूर्णमासाङ्गत्वम्। तच्चप्रकरणद्विविधम्। महाप्रकरणमवान्तरप्रकरणञ्चेति। तत्रमुख्यभावनासम्बन्धिप्रकरणमहाप्रकरणम्। तेनचप्रयाजादीनादर्शपूर्णमासाङ्गत्वम्। एतच्चप्रकृतावेवोभयाकाङ्क्षाया सम्भवात्। नतुविकृतौ। तत्रप्रकृतिवद्विकृतिः कर्त्तव्येत्यतिदेशेनकथम्भावाकाङ्क्षायाउपशमेनापूर्वाङ्गानामप्युभयाकाङ्क्षया विनियोगासम्भवात्। तस्मादपूर्वाङ्गानाम्स्थानादेवविकृत्यर्थत्वमिति। अङ्गभावनासम्बन्धिप्रकरणमवान्तरप्रकरणम्। तेनचाभिक्रमणादीनाप्रयाजाद्यङ्गत्वम्। तच्चसन्दंशेनैवज्ञायते। तदभावेचाविशेषात्सर्वेषाफलभावनाकथम्भावेनग्रहणप्रसङ्गेनप्रधानाङ्गत्वापत्तेः। एकाङ्गानुवादेनविधीयमानयोरप्यङ्गयोरन्तरालेविहितत्वंसन्दंशः। यथा। अभिक्रमणं। तद्विसमानयतउपभृतस्तेजोवाद्वत्यादिनाप्रयाजानुवादेन। किञ्चिदङ्ग-



विधायविधीयते। तदनन्तरमपिप्रयाजानुवादेनप्रयाजत्वम्। यस्यैव विदुष प्रयाजाइज्यन्ते। प्रैभ्योलोकेभ्योभ्रातृव्यान्नुदते। अभिक्रामजुहोत्यभिजित्यै इतितदनन्तर मपिप्रयाजानुवादेनयोवैप्रजानामिथुनवेदेत्यादिनाकिञ्चिदङ्ग विधीयते। अत प्रयाजाङ्गमध्येऽभिहितमभिक्रमण तदङ्ग प्रयाजैरपूर्वंकृत्वायागोपकारभावयेदितिज्ञाते। कथमेभिरपूर्वंकर्त्तव्यमिति। कथम्भावाकाङ्क्षाया सत्वात्। साचसन्दंशपतितैरभि क्रमणादिभिः शाम्यति। नचाङ्गभावनायाकथम्भावाकाङ्क्षाभाव'। भावनासाम्ये नतत्रापितत्सम्भवात्। यदिदप्रकरणंतत्क्रियायाएवसाचाद्विनियोजकद्रव्यगुणयोस्तुतद्द्वारा। तथाहि। यजेतस्वर्गकामइत्यत्रफलभवनाया कथम्भावाकाङ्क्षाया. सन्निधपठितमश्रूयमाणफलकक्रिया- जातमुपकार्याकाङ्क्षयेतिकर्त्तव्यतात्वेनाऽन्वेति। (*) क्रियायाएवलोकेकथम्भावाकाङ्क्षायामन्वयदर्शनात्। नहिकुठारेणछिन्द्यादित्यत्रकथम्भावाकाङ्क्षायाममुच्चार्यमाणोपिहस्तोऽन्वेति। किन्तुहस्तेनो द्यम्यनिपात्येत्युद्यमननिपातनेनएव। हस्तस्तद्वारैवान्वेतीतिसार्वजनीनमेतत्। इदचस्थाना

द्भ्योबलवत् । अतएवाजैर्दीव्यति राजन्यमितिविदेवनाद्यो धर्मा अभिषेचनीयसन्निधौपठितामपितस्माना मनतदङ्गम्०किन्तुप्रकरणाद्राजसूयाङ्गमितिमीमांसका. ॥

प्रकरणसम । पुं० नैयायिकानापदार्थावान्तरविशेषे ॥ तल्लक्षयति । यस्मात्प्रकरणचिन्तासनिर्णयार्थमपदिष्ट. प्रकरणसम. ॥ ४७ ॥ सद्धेतुस्वसाध्यस्यपरसाध्याभावस्यवा०निर्णयार्थमपदिष्ट प्रयुक्त प्रकरणसमउच्यते । सक इत्याकाङ्क्षयामाह । यस्मात्प्रकरण पक्षप्रतिपक्षावितिभाष्यम् । साध्यतदभाववत्तावितितदर्थ । तथाचनिर्णयार्थम् प्रयुक्तोहेतुर्यंचनिर्णयजनयितुमशक्तस्तुल्यबलेनपरेणप्रतिबन्धात्०किन्तुधर्मिणि साध्यवत्वतदभाववत्वम्वेतिचिन्ताजिज्ञासाप्रवर्तयतिसप्रकरणसम । यद्वा प्रकृष्ट कारणलिङ्ग परामर्शोवा०कोहेतुरनयो साधक. ० एतयो क परामर्श प्रमेतिवा यत्रजिज्ञासाभवतीत्यर्थ । यस्मादित्यादितुवस्तुस्थितिमात्रम् । लक्षणन्तुतुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वस्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शीवा । विरोधिपरामर्शस्यचहेतुनिष्ठत्वमेकज्ञानविषयत्वसम्बन्धेन । अन्यथाहेतोर्दुष्टत्व नस्यात् । अयञ्चदशाविशेषेदोषइत्यत सर्वतोरपि विरोधिपरामर्शकालेदुष्टत्वमिष्टमेवेत्यवधेयम् ॥ ४७ ॥

प्रकरी । स्त्री० नाट्याङ्गे ॥ चत्वरभूमौ ॥

प्रकर्ष. । पुं० विशेषे । अधिके ॥ उत्कर्षे ॥ यथा । गुणप्रकर्षजजनोनुरज्यतेजनानुरागप्रभवाहिसम्पद ॥ प्रकर्षणम् । कृष० । घञ् ॥

प्रकाण्ड पुं० न० विटपे ॥ तरोर्मूलशाखान्तरे । मूलादारभ्यशाखावधिखण्डे । स्कन्धे ॥ त्रि० प्रशस्ते ॥ प्रगत काण्डोऽधमोयस्मात् । प्रशस्तोगौ गोप्रकाण्ड । प्रकाण्डस्य रूढिशब्दत्वात्प्रशसावचनैरितिसमास ॥ प्रकाण्डते । कडिमदने । चु० । एरच् । पृ० ॥ प्रकाम्यते । कमु०णिङ् । वरण्डादयश्चेतिडोत्र ॥

प्रकाण्डर । पुं० द्रुमे ॥

प्रकामम् । अ० अतिशये ॥

प्रकामम् । त्रि० निकामे । यथेप्सिते ॥ प्रकमनम् । कमु० । घञ् ॥

प्रकार । पुं० भेदे ॥ सामान्यस्यभेदकेविशेषे ॥ सादृश्ये ॥ प्रकरणम् । कृञोघञ् ॥

प्रकाश । पुं० द्योते । आतपे ॥ स्फुटे । प्रकटे । उल्वणे । व्यक्ते ॥ प्रहासे ॥ बुद्धिपरिणामविशेषेविषयाकारे०दीपवत् । स्वविषयावरण

विरोधिनिसत्वकार्ये ॥ प्रभाते ॥ न० कार्स्ये ॥ त्रि० व्यक्ते । प्रकाशनम् प्रकाशतेवा । काशृदीप्तौ । घञ्० पचाद्यच्वा ॥ अतिप्रसिद्धे ॥

प्रकाशक । पु० सूर्यादिवदन्यावभासकेपरमात्मनि ॥ सूर्यादिषु ॥ त्रि० व्यञ्जके । अवभासके । प्रकाशकर्त्तरि ॥ प्रकाशयति । काशृ० । खुल् ॥

प्रकाशकज्ञाता । पु० कुक्कुटे ॥ त्रि० प्रकाशज्ञातरि ॥

प्रकाशन । पु० प्रकाशके ॥ प्रकाशयति । काशृ०ल्यु ॥

प्रकाशमान । त्रि० भासमाने ॥ क्षिप्तोपलब्धात्मनासदाप्रकाशमानमेवब्रह्मेतियथा ॥

प्रकाशात्मा । पु० दिवाकरे । सूर्ये ॥ प्रकाशआत्मास्वरूपयस्य ॥ त्रि० व्यक्तस्वभावे ॥

प्रकाशित । त्रि० व्यक्तीकृते । दर्शिते । आविष्कृते । प्रकटिते । सञ्जातप्रकाशे ॥ ता० इतच् ॥

प्रकाशी । त्रि० दीप्तिजनके ॥

प्रकीर्ण: । पु० पूतिकरञ्जे ॥ न० ग्रन्थविच्छेदे ॥ चामरे ॥ त्रि०असङ्गते ॥ नानाप्रकारमिश्रिते ॥ यथा । प्रकीर्णं पुष्पाणाङ्हरिचरणयोरञ्जलिरयमितिवेणीसंहार ॥ विस्तृते । विक्षिप्ते ॥ य० । प्रकीर्णभाण्डमनवेक्ष्यकारिणींसदैवभर्त्तुः प्रतिकूलवादिनीम् । परस्यवेश्माभिरतामलज्जामेवविधास्त्रींपरिवर्जयामीतिलक्ष्मीचरित्रम् ॥ प्रकीर्यतेस्म । कृविक्षेपे । क्त ॥

प्रकीर्णक । पु०अश्वे ॥ न० चामरे ॥ विस्तारे । ग्रन्थविभेदे ॥ पापवि० ॥ यदनुक्तं तत्प्रकीर्णकम् । अनुक्तम०अनुक्तनिष्कृतिकम् । प्रकीर्णपातकेज्ञात्वागुरुत्वमथलाघवम् । प्रायश्चित्तं बुध कुर्यात्ब्राह्मणानुमतेसदा ॥ विवादपदे ॥ नदृष्टं यच्चपूर्वेषुसर्वंतत्स्यात्प्रकीर्णकम् ॥ सञ्ज्ञायाकन् ॥

प्रकीर्त्तित । त्रि० कथिते ॥ प्रकर्षेणकीर्त्तित ॥ यथा । प्रभूतमल्पंकार्यंवायोनरः कर्त्तुमिच्छति । सर्वारम्भेणतत्कुर्यात् सिंहादेकंप्रकीर्त्तितम् ॥

प्रकीर्य्य पु० पूतिकरञ्जे । कलिकारके । काठकरञ्ज०इ०भा० । नाटाकरञ्ज०इ० गौ०भा० ॥ घृतकरञ्जे ॥ रीठाकरञ्जे ॥ त्रि०विप्रकीर्ये ॥ प्रकीर्यते । कृ० । अघ्न्यादित्वाद्यक् ॥

प्रकृत त्रि०प्रस्तुते । प्रकरणप्राप्ते ॥ यथा । प्रकृतमनुसराम ॥ प्रकर्षेणकृते ॥ अविकृते ॥ प्रक्रियतेस्म । कृञ् क्तः ॥

प्रकृतार्थं त्रि० प्रकरणप्राप्तस्याऽभिधेये
प्रकृति । स्त्री० अमात्यादिषु ॥ तेच
। यथा । स्वाम्यमात्यसुहृत्कोषरा-
ष्ट्रदुर्गबलानिच । राज्याङ्गानिप्रकृत
य । इति ॥ प्रकृते प्रभावस्तू
क्तोदेवीभागवतेइन्द्र प्रतिहरिश्चन्द्र
नृपेण यथा । भुङ्क्तेशक्रनृपोराज्य
प्रभावात्प्रकृतेर्ध्रुवम् । यजतेचम-
हायज्ञै कर्मपुंतंकरोतिचेति ॥ प्र
कृष्टकरोतिराज्यमिति । क्तिच् ॥
स्वभावे ॥ सांसिद्धिकीस्वाभाविकी
सहजाप्रकृताचया । प्रकृति सेति
विज्ञेयास्वभावनजहातिया ॥ जा
तौ॥ लिङ्गे॥ लिङ्गम् ०व्यक्तम् । स्त्री
पुन्नपुंसकञ्चेतिस्वामी । यथा०हती
याप्रकृति शब्द ॥ पौरवर्गे । पौ
राणांश्रेणिषु ॥ शिल्पिनि ॥
शक्तौ ॥ सापञ्चविधायथा । साप
ञ्चविधायथा। गणेशजननीदुर्गाराधा
लक्ष्मीसरस्वती । सावित्रीचसृष्टिवि
धौप्रकृति पञ्चमीस्मृतेति॥ निरुक्ति
स्तु । प्रकृष्टवाचक प्रश्चकृतिश्चसृष्टि
वाचक । सृष्टौप्रकृष्टायादेवीप्रकृ
ति साप्रकीर्तिता ॥ गुणे प्रकृष्टे
सत्त्वे चप्रशब्दोवर्ततेश्रुतौ । मध्यमे
वर्ततेप्रश्चकृतिश्चसृष्टिवाचक सृष्टे
राद्याचयादेवीप्रकृति । साप्रकीर्ति
तेति ॥ योषिति ॥ परमात्मनि ॥
प्रत्ययात्पूर्विकायाम् । प्रत्ययात्-
प्रथमे ॥ साद्विधा । धातु प्रातिप
दिकञ्च ॥ पञ्चमहाभूतेषु ॥ करणे
॥ गुह्ये ॥ जन्तौ ॥ एकविंशत्यक्षरा
याञ्छन्दोवृत्तौ ॥ एकविंशतिसङ्ख्ये
॥ मातरि । जनन्याम् ॥ स्वास्थ्ये ॥
योनौ । उपादानकारणे । मूलप्र-
कृतौ । सत्वरजस्तमसांसाम्याव
स्थायाम् ॥ यथा । सत्व रजस्तमश्चै
वगुणत्रयमुदाहृतम् । साम्यावस्थि
तिरेतेषांप्रकृति.परिकीर्तिता ॥ के
चित्प्रधानमित्याहुरव्यक्तमपरेजगु
। एतदेवजगत्सृष्टिं करोतिविकरो
तिच ॥ मूलप्रकृतिरविकृति ।
प्रकरोतीतिप्रकृति । साअविकृति
प्रकृतिरेवेत्यर्थ. । कस्मात्०इत्यत
उक्तंमूलेति । मूलञ्चासौप्रकृतिश्चे
ति०मूलप्रकृति । विश्वस्यकार्यक
लापस्यसामूलनत्वस्यामूलान्तर
म्०अनवस्थाप्रसङ्गात् । नचानवस्था
यामस्तिप्रमाणमितिभाव । इति
साङ्ख्यविद ॥ अविद्यायाम् ॥
प्रकृतिर्नाममाया । साचसत्वरजस्त
मोगुणमयीअघटनघटनापटीयसी-
मिथ्याज्ञानात्मिका पारमेश्वरीश-
क्ति ॥ प्राग्जन्मकृतधर्माधर्मज्ञाने
च्छादिसंस्कारेवर्तमानजन्मन्यभिव्य
क्ता०सर्वत्रबलवति ॥ पुरुषार्थभ्रंस-
हेतुभूतायामनिर्वचनीयस्वभावाया
त्रिगुणात्मिकायासर्वविकारकारण

भूतायांभगवन्मायायाम् ॥ मायान्तु प्रकृतिंविद्यात् । प्रक्रियतेऽनयेति-प्रकृतिरुपादानकारणविद्यानामी-यादिस्त्वर्थः ॥ पराऽपरभेदेनप्रकृतिर्द्विधा । परासैवजगल्लक्षणा॰ अपराचेतनजलक्षणा । यथा । भूमिरापोऽनलोवायुः खंमनोबुद्धिरेवच । अहङ्कारइतीयमेभिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यांप्रकृतिंविद्धिमेपराम् । जीवभूतांमहाबाहोययेदंधार्यतेजगत् ॥ इति ॥ समग्राङ्गोपदेशे ॥ यत्रसमग्राङ्गोपदेशः साप्रकृतिः । यथादर्शपौर्णमासादिः । तत्प्रकरणेसर्वाङ्गपाठात् ॥ प्रकृतिवद्विकृतिः कर्तव्येतिमीमांसका-नाम्यवस्था । तत्रयस्मिन्यागे॰ इति कर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यतेसाप्रकृतिः । येनचोपजीव्यतेसाप्रकृतिरितितदर्थः ॥ प्रकरणम् । डुकृञ्॰ । क्तिन् ॥ प्रकुरुते । क्तिच् ॥

प्रकृतिजः । त्रि॰ स्वभावप्रभवे । प्रकृतेरभिव्यक्तेःरागद्वेषादौ ॥ प्रकृतेर्जातः । जनी॰ । ड ॥

प्रकृतित्वम् । न॰ तत्त्वान्तरोपादाने ॥ तदेवप्रकृतित्वंसांख्यनयेऽभिमत-म् । अतोयद्यपिपृथिव्यादीनामपि गोघटवृक्षादयोविकाराः सन्ति॰ एवंतद्विकारभेदानांपयोबीजादीनां दध्यङ्कुरादयः तथापिगवादयो बीजादयोवापृथिव्यादिभ्यस्तत्त्वान्तरम् । सर्वेषांगोघटादीनांस्थूलत्व-मिन्द्रियग्राह्यत्वञ्चसममितिनतत्त्वान्तरम् ॥

प्रकृतिदान्तः । त्रि॰ स्वभावतएवोपशान्ते ॥ प्रकृत्यादान्तः ॥

प्रकृतिलयः । पुं॰ प्रधानलये । प्रकृतौसंश्लेषे ॥ पुरुषतत्वानभिज्ञस्य॰ वैराग्यमात्रात्प्रकृतिलयः । प्रकृतिग्रहणात्प्रकृतिमहदहङ्कारभूतेन्द्रियाणिगृह्यन्ते । तेष्वात्मबुध्योपास्यमानेषुलयः । वैराग्यात्प्रकृतिलयः ॥

प्रकृतिविकृतिः । स्त्री॰ महदादिसप्तसु ॥ महदाद्याः प्रकृतिविकृतयः सप्त । प्रकृतयश्चविकृतयश्चताइति-प्रकृतिविकृतयः सप्त । तथाहि । महत्तत्वमहङ्कारस्यप्रकृतिर्विकृतिश्च मूलप्रकृतेः । एवमहङ्कारतत्वंतन्मात्राणामिन्द्रियाणाञ्चप्रकृतिर्विकृतिश्चमहतः । एवंपञ्चतन्मात्राणितत्त्वानिभूतानामाकाशादीनांप्रकृतयोविकृतयश्चाहङ्कारस्य ॥

प्रकृतिविरूपम् । न॰ गगनादौ ॥ तत्त्वविभाजकोपाध्यवच्छिन्नाजनकत्वा-त् ॥ विरुद्धरूपंविरूपम् । प्रकृतेर्विरूपम् ॥ त्रि॰ प्रकृतेरसमानरूपे ॥

प्रकृतिसरूपम् । न॰ महदादिसप्तके ॥

तत्वविभाजकोपाध्यवच्छिन्नजनकत्वात् ॥ समानरूपसरूपम् । प्रकृते समानरूपे ॥

प्रकृतिस्थ । त्रि० आयत्स्वप्रभोगजनककर्मक्षयेप्रकृतावस्थानेसूक्ष्मरूपेणस्थिते । स्वभावस्थे ॥ प्रकृतौतिष्ठति । ष्ठा० । सुपिस्थइतिक ॥ विकारशून्ये ॥ प्रकृतौसाम्यादवस्थायांतिष्ठतीतितथा ॥

प्रकृत्याख्या । स्त्री० ब्रह्म पदवाच्यायातुष्टौ ॥ प्रकृतिराख्यायस्या ॥

प्रकृष्ट । त्रि० प्रधाने । श्रये ॥ उत्तमे ॥ प्रकृष्यतेऽयम् । कृष० । कर्मणिक्त ॥

प्रकेत । पु० चिह्नभूते ॥ प्रकृष्ट . केत ॥

प्रकेतनम् । न० गृहे ॥ प्रकृष्ट केतनम्

प्रकोष्ठ । पु० भूपकक्षान्तरे ॥ विस्तृतकरेहस्ते ॥ मणिबन्धकूर्परयोरन्तरे ॥ प्रकुष्यतेऽनेन । कुषनिष्कर्षे । उषिकुषीतिस्थन् ॥ प्रविष्ट कोष्ठंकुसूलवा । अत्यादयइतिसमास ॥ भुजे ॥

प्रक्खर । पु० अश्वकवचे । प्रखरे । पाखर० इ० भा० ॥ इ० श०मा० ॥

प्रक्रान्ता । त्रि० उपक्रमकर्तरि । आरम्भकर्तरि ॥

प्रक्रम । पु० प्रथमारम्भे । उपक्रमे ॥ अवसरे ॥ क्रमे ॥ प्रक्रमणम् । क्रमु० । घञ् ॥ अध्ययनपरिचर्यार्थक्रमपाठे ॥

प्रक्रान्त । त्रि० प्रस्तुते प्रकरणस्थे ॥ आरब्धे ॥ प्रक्रामतिस्म । क्रमु० । क्त . ॥

प्रक्रिया । स्त्री० नृपादीनांचामरधारणच्छत्रधारणादिव्यापारे । अधिकारे । उत्पादने । साधने ॥ प्रकारे ॥ औषधिप्रयोगे ॥ प्रकर्षायकरणम् । डुकृञ्० । कृञ श्चेतिश । रिङ् । इयङ् । टाप् । प्रकृष्टकार्ये ॥

प्रक्रीडित । त्रि० क्रीडाकरे ॥ प्रक्रीडति । क्रीड० । कर्तरिक्त ॥

प्रक्लिन्न । त्रि० प्रकर्षेणक्लेदयुक्ते ॥ तृप्ते ॥

प्रक्वण । पु० प्रक्वाणे । वीणाया क्वणिते ॥ क्वणशब्दे । क्वणोवीणाया श्चेत्यप् ॥

प्रक्वाण । पु० प्रक्वणे । वीणाशब्दे ॥ क्वणोवीणायाश्चेतिपाक्षिकोघञ् ॥

प्रक्षर । पु० अश्वसन्नाहे । प्रखरे । पाखर इ० भा० ॥ इ० हि० प० ॥

प्रक्षालनम् । न० धावने । मार्जने ॥

प्रक्षालित । त्रि० धौतेमार्जिते ॥

प्रक्षिप्त । त्रि० कृतप्रक्षेपे ॥ प्रक्षिप्यतेस्म । क्षिप० । क्त ॥

प्रक्षेप । पु० औषधादिषुक्षेपणीयद्रव्ये ॥ विक्षेपे ॥

प्रक्षेपणम् । निक्षेपणे ॥ प्रकर्षेणक्षेपणम् ॥

प्रक्षोभ . । पु० प्रकृष्टक्षोभे ॥ न० चलने ।

प्रक्ष्वेडन । पुं० सर्वलोहमयेशरे । नाराचे ॥ प्रकर्षेणक्ष्वेडते । ञिक्ष्वदा अव्यक्तेशब्दे । ल्यु । पृ० ।

प्रक्ष्वेदन . । पु० प्रक्ष्वेडने । नाराचे ।

प्रखर । पु० हयसन्नाहे । पाखर० इ० भा० ॥ कुक्कुरे ॥ अश्वतरे ॥ वेसरे ॥ त्रि० अत्यन्तखरे ॥ अच्यु ये ॥

प्रख्य । त्रि० उत्तरपदेतुल्यार्थवाचके । यथा । स्युरुत्तरपदेप्रख्य प्रकार प्रतिमोनिभ इतिहेमचन्द्र ॥ मद्दुन्मान ' प्रख्यपय सरस्वतीतितुल्यम् ॥

प्रख्या । स्त्री० कान्तौ । प्रख्यानम् । ख्या० । चक्षिङादेशोवा । आतश्चोपसर्गइत्यङ् । टाप् ॥

प्रख्यात । त्रि० प्रसिद्धे । प्रकृष्टख्यातयुक्ते । विख्याते ॥ प्रकर्षेणआख्यायि । ख्याप्रकथने । चक्षिङ् ख्याञ्वा । क्त . ॥

प्रख्यातपितृक । पुं० प्रख्यातवप्तृके । विख्यातपितृके । आमुष्यायणे ॥ प्रख्यात पितायस्य । कप् ।

प्रख्याति । स्त्री० प्रकृष्टायाम् । प्रकृष्टायांकीर्तौ । विख्यातौ ॥

प्रख्यानम् । न० प्रतीतौ ॥

प्रगण्ड । पुं० कूर्परोपरिकक्षपर्यन्तभागे । भुजमध्योपरिभागे ॥ प्रत्यासन्नोगण्ड कपोलोऽस्य ॥

प्रगण्डी । स्त्री० बहि प्राकारे ॥ दुर्गप्राकारभित्तौ शूराणामुपवेशनस्थाने ॥

प्रगतजानु ' । त्रि० प्रगतजानुके ॥

प्रगतजानुक । त्रि० प्रज्ञौ । वातादिनाविरलजानुके ॥ प्रगतेविरलेजानुनीयस्य । कप् ॥

प्रगन्ध । पु० पर्पटे ॥

प्रगल्भ । त्रि० प्रतिभान्विते । प्रष्टव्याद्यवसरे अकौशलाप्रतिपत्त्याद्ययोगवति । प्रत्युत्पन्नमतौ । प्रगल्भते । गल्भधाष्ट्र्ये । पचाद्यच् । धृष्टे ॥ प्रौढे ॥ वाग्मिनि ॥

प्रगल्भगी । स्त्री० उदारवचसि ॥ त्रि० तद्वति ॥

प्रगलभता । स्त्री० ज्ञानोत्कर्षे ॥ प्रगल्भभावे । उत्साहे । उद्यमे ॥ भि' शङ्कत्व प्रयोगेष्वबुधे कृताप्रगल्भता

प्रगल्भा । स्त्री० नायिकाभेदे ॥

प्रगाढ । त्रि० कृच्छ्रे ॥ दृढे ॥ प्रगाह्यतेस्म । गाहू० । क्त । यस्यविभाषेतिनेट् ॥ भृशे ॥

प्रगाता । त्रि० उत्तमगायके ॥

प्रगाथ ' । पु० चतुर्थषष्ठौपादौगार्हते प्रगाथेपुनरभ्या सिस्वोत्तरयोरवस्थे दित्येवमादिवचनाद्यद्दयोर्ऋचो- स्त्रिस्त्र क्रियन्ते सप्रगाथइत्युच्यते ॥

प्रकर्षेणागानंयच ॥ यद्वा । प्रग्रच्यते । ग्रन्थ० । अकर्त्तरिचकारकइति कर्मणिघञ् । पृषोदरादित्वाद्रेफ नकारयोर्लोप । उक्तेर्थेरूढश्चायम् ॥

प्रगुण . । चि० ऋजौ ॥ प्रकृष्टागुणा यस्य ॥ प्रकृष्टलाघवादिगुणवति ॥

प्रगृह्य . । पु० प्रातिशाख्यादिप्रसिद्ध पदविशेषे ॥ स्वरोहितवनसम्बीयते यस्यपूर्वाचार्यै . प्रगृह्यसज्ञाविहिता प्रगृह्यते । ग्रहउपादाने । असन्नि कर्षेणग्रहैरर्थं . । पदास्वैरिवाह्या पक्ष्येषुचेतिक्यप् । ग्रहिज्येतिसम्प्र सारणम् ॥

प्रगे । अ० प्रात ' काले ॥ प्रगीयतेऽत्र वा । गैशब्दे । केप्रत्यय : ॥

प्रगेतन ' । चि० प्रातस्तने । प्रातस्तने ॥ ॥ प्रगेभव ' । सायश्चिरमितिल्युल्यु टौ ॥

प्रग्रह ' । पु० तुलासूत्रे ॥ वन्द्याम् । आकृष्टमनुष्यादौ ॥ नियमने ॥ भुजे ॥ हयादिरश्मौ ॥ रश्मौ सुव र्णालुमहीरुहे ॥ रश्मनायाम् ॥ क- र्णिकारवृक्षे ॥ प्रकृष्टाभिनिवेशे ॥ बन्धने ॥ प्रकृतिभावावग्रहाद्यभावे परस्परमचोरसन्निकर्षे ॥ प्रगृह्यते । ग्रहउपादाने । प्रेवणिजाम् । रश्मौचेतिघञभावापक्षे० ग्रहवृद्धि त्यप् ॥

प्रग्राह :४ पु० तुलासूत्रे ॥ बन्द्यादौ नावम्बने ॥ अभीषौ ॥ प्रग्रहे । प्रगृह्यते । ग्रह० । प्रेवणिजां रश्मौचेतिघञ् ॥ यद्वा । प्रग्र हणम् ॥ ग्रह० । प्रेलिप्सायामितिघञ् ॥ यथा । पात्रप्रग्राहेणच रतिभिक्षु . । भिक्षापात्रोपादानेन पात्रंगृहीत्वेतियावत् ॥

प्रघटावित् । चि० शास्त्रगण्डे ॥

प्रघण ' । पु० ताम्रकुम्भे ॥ लोहमुद्गरे बहिर्द्वारप्रकोष्ठके । अलिन्दे ॥ प्रव णन्ति ' पादै , प्रहन्यते । हन० । अगारैकदेशेप्रघण ' प्रघाणश्चेति साधु : । द्वारदेशेद्वौप्रकोष्ठौ । आ- भ्यन्तरोबाह्यश्च । तत्रबाह्यप्रकोष्ठे निपातनम् ॥

प्रघस . । पु० असुरे ॥ दैत्यप्रभेदे ॥ प्रकर्षेणात्ति । अद० पचाद्यच् । घस्लृभावे अच्युपसङ्ख्यानम् । उपसर्गेदइत्युपितु० घञपोश्चेति घस्लादेश ॥

प्रघाण . । पु० ताम्रकुम्भे ॥ लोहमुद्ग रे ॥ अलिन्दे । बहिर्द्वारप्रकोष्ठके ॥ प्रविशन्ति : पादै ' प्रहन्यते । हन० । अगारैकदेशेप्रघण प्रघाणश्चेति साधु : । बाह्यप्रकोष्ठेनिपातनमि दम् ॥

प्रघात : । पु० अभिसम्पाते । युद्धे ॥ प्रकर्षेणहननम्० हन्यतेवा । हन० । घञ् ॥

प्रचूर्ण । पु० अतिथौ ॥ त्रि० प्रकृष्ट चूर्णयुक्ते ॥

प्रचक्रम् । न० प्रस्थितायांसेनायां ॥ प्रस्थित चक्र सैन्यम् ॥

प्रचक्षा । पुं० बृहस्पतौ ॥

प्रचण्ड । पु० श्वेतकरवीरे ॥ त्रि० दुर्वहे । दुर्द्धर्षे ॥ प्रतापिनि ॥

प्रचण्डमूर्त्ति । पु० वरुणद्रुमे ॥ त्रि० प्रतापयुक्तशरीरे ॥ प्रचण्डा मूर्त्तिर्यस्य ॥

प्रचण्डा । स्त्री० देवीविशेषे ॥ अस्या स्थान कगलराड . ॥ श्वेतदूर्वायाम् ॥

प्रचय । पु० समूहे ॥ प्रसङ्गे ॥ पुष्पावचये ॥ शिथिलाख्यसयोगे ॥ अय श्चपरिमाणजनक । यथा । सङ्ख्यात परिमाणाच्चप्रचयादपिजायते । प्रचय शिथिलाख्योय सयोगस्तेनजन्यते ॥ परिमाणतू लकादीनाशस्त्वाश्रयनाशत ॥ इ० भा० प० ॥ प्रचीयते । चिञ् एरच् ॥

प्रचयगमनम् । न० बाहुल्येनप्रसरणे ॥ प्रचयेनगमनम् ॥

प्रचर । पु० पथि ॥

प्रचररूप । त्रि० व्यक्तरूपे ॥

प्रचलकी । पु ० प्रचलाकिनि ॥

प्रचलाक । पु ० शराघाते ॥ शिखण्डे । भुजङ्गमे ॥

प्रचलाकी । पु ० मयूरे ॥ भुजङ्गे ॥

प्रचलायित । त्रि० निद्रादिनाघूर्णिते ॥ प्रचलइवाचरति । कर्त्तु क्यङ्सलोपश्चेति० सन्नतात्कर्त्तरिक्त ॥ प्रचलायाजातास्येतिवा । प्रचलायते स्म । गत्यर्थेतिक्तोवा॥

प्रचलित । त्रि० प्रस्थिते ॥

प्रचार । त्रि० सततव्यवहारे ॥ व्यक्ते । प्रकाशे ॥ प्रचरणम् । चर० । घञ् ॥

प्रचित । त्रि० परिवृंहिते ॥ प्रचीयते स्म । चिञ० । क्त ॥

प्रचितकम् । न० दण्डकविभेदे ॥ य । प्रचितकसमभिधोधीरधीभि स्मृतोदण्डकोनद्वयादुत्तरै सप्तभिर्यै : ॥ यथा सुन्दरयदुकुलाम्भोधिचन्द्रप्रभोदेवकीगर्भरत्नचिलोकैकनाथ० प्रचितकपटपुरारिव्रजेज्ञामदन्तावलस्तोमविद्रावणोकेशरीन्द्र । चरणनखरसुधांशुच्छटोन्मेषनि शेषितध्यायिचेतोनिविष्टान्धकार० प्रणतजनपरितापोग्रदावानलोच्छेदमेघप्रसीदप्रसीदप्रसीद ॥

प्रचीयमान । त्रि० पुष्यमाणे ॥

प्रचुर । त्रि० प्रभूते । प्राज्ये बहुले ॥ प्रचोरयति । चुर० । दूरपर्येतिक । चुरादीनाणिज्वैकल्पिक : ॥ प्रगतश्चुरायाइतिवा

प्रचुरपुरुष पु चौरे ॥ बहुनरे

प्रचेता । पुं॰ वरुणे । अप्पतौ ॥ मुनिविशेषे ॥ प्राचीनबर्हिषस्तन येषु ॥ प्राचीनबर्हिष पुत्रा ग्रतद्रुत्यादश्राभवन् । तुल्यनामव्रता सर्वे धर्मस्नाता. प्रचेतस. ॥ त्रि॰ प्रकृष्टहृदि ॥ प्रकृष्ट चेतोऽस्य ॥ प्रचेतयतिवा । चिती॰ । असुन् ॥

प्रचेतसी । स्त्री॰ कट्फले ॥

प्रचेता । पु॰ सारथौ ॥

प्रचेलम् । न॰ पीलकाष्ठे ॥

पचेलक । पु अश्वे ॥

प्रचोदनी । स्त्री॰ कण्टकार्याम् ॥ प्रचोदयति । चुदसञ्चोदने । ल्युट् ॥

प्रचोदित । त्रि॰ प्रेरिते ॥

प्रच्छद । पुं॰ आच्छादने ॥

प्रच्छदपट । पुं निचोले । येनतूलशय्यादिप्रच्छाद्यते तस्मिन्नस्त्रे इति स्वामी ॥ डोलिकाद्यावरणपटे॰ कृष्णेके ॥ स्त्रीपरिधानपटे॰ बुरका॰ इतिख्याते इत्यपरे ॥ आस्तरणपटे ॥ पिच्छौडा॰ पिच्छौडी नाम वाससि ॥ प्रच्छदति॰ प्रच्छाद्यते अनेनवा । चुरादिण्यन्तात्घ । छादेर्घेद्व्युपसर्गस्य इतिह्रस्व । प्रच्छदस्यापटस्य ॥

प्रच्छना । स्त्री॰ आमन्त्रणायाम् ॥

प्रच्छन्नम् । न॰ अन्तर्द्वारे प्रकोष्ठीयगेहान्तर्द्वारि ॥ प्रकर्षेणच्छन्नम् । कुगतीतिसमास. त्रि॰ गूढे ॥ च्छन्ने ॥

प्रच्छन्नतस्कर । पुं॰ कितवकुशीलवादौ यथा ॥ कितवान्कुशीलवान्क्रूरान्पाषण्डस्थांश्चमानवान् । विकर्मस्थान्शौण्डिकांश्चक्षिप्रं निर्वासयेत्पुरात् ॥ एतेराष्ट्रेवर्त्तमानाराज्ञ प्रच्छन्नतस्करा । विकर्मक्रिययानित्यं बाधन्तेभद्रिका. प्रजा इतिमानवेनवमोऽध्याय ॥

प्रच्छन्नहृदय । त्रि॰ गूढाभिप्राये ॥ प्रच्छन्नहृदययस्य ॥

प्रच्छर्दिका । स्त्री॰ वमिरोगे ॥ प्रच्छर्दनम् । छर्दवमने । रोगाख्याते । ण्वुल् ॥

प्रच्छादनम् । न॰ उत्तरीयवस्त्रे प्रावरणे ॥

प्रच्छादित । त्रि॰ आच्छादिते ॥

प्रजन । पु॰ पशूनागर्भग्रहणकाले ॥ उपसरे । प्रथमगर्भग्रहे ॥ स्त्रीगव्यादिषुपुङ्गवादीनाप्रथमगर्भाधानार्थमैथुनाभियोगे ॥ गर्भधारणे प्रजननम् । जनी॰ । घञ् । जनिवध्योरितिनवृद्धि . ॥ यद्वाघन्तादेरच् । प्रशब्दोधात्वर्थविपरीतयति । प्रादुर्भावस्यनपरीत्यञ्चगर्भग्रहणम् । तत्रप्रथम द्वितीयादिकं वैत्यजननायङ्घल्येकि । हरदत्तस्वरसोप्येवम् । वृत्तौतुप्रथमगर्भग्रहणमितिव्याख्यातम् ॥

